# संस्कृतव्याकरणम्

## (संस्कृतशास्त्रम्)

ऐच्छिकम्   कक्षा ८



# संस्कृतव्याकरणम्

## संस्कृतशास्त्रम्

(ऐच्छिकम्)

## कक्षा ८

प्रकाशक
जनक शिक्षा सामग्री केन्द्र लिमिटेड
सानो ठिमी, भक्तपुर

पाठ्यक्रम (२०३८) अनुसार
पहिलो संस्करण २०४२ असार

तपाईंले किनेको पुस्तकमा छपाइ प्रविधि सम्बन्धी कुनै त्रुटी फेला परेमा अधिकृत वितरक (साझा) अथवा स्थानीय विक्रेताबाट उक्त पुस्तक साट्न सक्नुहुनेछ ।

ज. शि. सा. के. लि.

**मूल्य रू.**

जनक शिक्षा सामग्री केन्द्र लिमिटेड (एजुकेशन प्रेस) मा मुद्रित ।



"राष्ट्रिय प्रतिभालाई फुलाउने, फलाउने
तथा जनताको मनोभावनालाई
विकासमूलक बनाउने नीति लिई लागू
गरिएको यस राष्ट्रिय शिक्षा
योजनाबाट केही वर्षभित्रै एउटा
जागरूक, परिश्रमी र उन्नतिशील
समाजको सिर्जना हुन सक्नेछ भन्ने
मैले आशा लिएको छु।"

– श्री ५ वीरेन्द्र

# हाम्रो भनाइ

शिक्षालाई जीवन सापेक्ष गराई राष्ट्रिय एकता, सार्वभौमिकता, राजमुकुट र स्वतन्त्रताको रक्षा गर्ने कर्तव्यनिष्ठ नागरिक तयार गराउने र सामाजिक जीवन यापनका लागि आवश्यक ज्ञान र सीप हासिल गराउने, राष्ट्रिय शिक्षा पद्धतिको योजना २०२८ को विशुद्ध उद्देश्य अनुरूप विद्यालयस्तरका पाठ्यक्रम पाठ्यपुस्तकहरूको विकास गर्ने प्रक्रिया चालू रहिआएको ।

श्रमप्रति श्रद्धा जगाई उपयोगी नागरिक तयार गराउने र देशभक्ति तथा ईश्वरभक्ति सिकाई अनुशासित नागरिक तयार गराउने माध्यमिक शिक्षाको उद्देश्यमा आधारित संशोधित पाठ्यक्रम २०३८ अनुसार यो पाठ्यपुस्तक तयार गराई प्रकाशमा ल्याइएको छ ।

यस पाठ्यपुस्तकको संकलन तथा सम्पादन श्री पुरुसोत्तम सापकोटाले गर्नु भएको हो ।

सम्बन्धित विषयका अनुभवी शिक्षक, प्राध्यापक एवं विशेषज्ञहरूको सुझाव समेतलाई ध्यानमा राखी यस पाठ्यपुस्तकलाई सकेसम्म स्तरयुक्त बनाउने प्रयास गरिएको छ तापनि यसमा भाषागत, विषयगत र शैलीगत कतिपय त्रुटिहरू अझ हट्न नसकेका होलान् । तिनका सुधारका लागि शिक्षक, अभिभावक विद्यार्थी लगायत सबै बुद्धिजीवी पाठकहरूको सक्रिय सहयोगको महत्त्वपूर्ण भूमिका रहने हुँदा यस पवित्र सेवा कार्यमा यहाँहरूको रचनात्मक सुझावको यो केन्द्र सदैव स्वागत गर्दछ ।

श्री ५ को सरकार

२०४२, आषाढ

शिक्षा तथा संस्कृति मन्त्रालय

पाठ्यक्रम पाठ्यपुस्तक तथा निरीक्षण विकास केन्द्र

हरिहर भवन

# प्रस्तावना

यस्याः कस्या अपि भाषायाः शुद्धोच्चारणं शुद्धलेखनं चावश्यकं मन्यते । भाषासु संस्कृतभाषा प्राचीनकालात् प्रचलिता प्रसिद्धा च । नामैवास्य संस्कृतं वर्तते, सुरगीरिति च भण्यते । अस्या भाषाया अपि शुद्धोच्चारणं शुद्धलेखनं च परमावश्यकमित्यत्र न कोऽपि शङ्कालेशः ।

संस्कृतभाषाया व्यवस्थाबोधनाय बहवो व्याकरणग्रन्थाश्चिरन्तनकालान्निर्मिताः प्राप्यन्ते श्रूयन्ते च । तेषु परिष्कृतस्य सूत्रात्मकस्य पाणिनीय व्याकरणस्य वैशिष्ट्यं सर्वैः सशिरःकम्पं स्वीक्रियते । व्यतीताभ्यश्चतुः शताब्दीभ्य इतः पाणिनेर्व्याकरणस्य सिद्धान्त-मध्य–लघुरूपेण त्रयो व्याख्याग्रन्थाः प्रसिद्धाः । तेषु विद्वद्वर भट्टोजिदीक्षितनिबद्धा सिद्धान्त-कौमुदी बहुविधशब्दसाधनाय परमोपयोगिन्यपि बृहदाकारा कठिना चेति अल्पबुद्धीनां बालानां कृते दुर्बोधा । स्वल्पाकारा लघुकौमुदी तु सरलापि अल्पकलेवरत्वान्नबहुविधव्यावहा-रिकशब्दसाधनाय समर्थेति । तेन मध्यमकलेवरा मध्यकौमुदी एव मध्यमार्गे स्थिताऽध्य-यनाध्यापने बहु प्रचलिता ।

वैयाकरणेन विदुषा वरदराजाचार्येण विरचिता मध्यसिद्धान्तकौमुदी सिद्धान्तकौमुदीव नातिविस्तीर्णा, लघुकौमुदीव नातितन्वी च । तेन सा सरलया सरण्या व्याकरणशास्त्रे प्रविविक्षूणां मन्दमेधसामपि बालानां मनसो मोदमादधाना सर्वत्र विराजतेतराम् । लघु-कौमुद्या मध्यकौमुद्याश्च निर्मापको विद्वान्– एक एव दुर्गातनयः श्रीमान् वरदराजाचार्यो वर्तते । अयञ्च षोडशशताब्द्याःसमीपे दक्षिणभारते समुत्पन्नः सिद्धान्तकौमुदी निर्मातुर्भट्टोजि-दीक्षितस्य शिष्यः । १६५० वैक्रमेऽनेन लघुकौमुद्या मध्यकौमुद्याश्च निर्माणं कृतमिति मन्यते ।

श्रीमता भट्टोजिदीक्षितेन सिद्धान्तकौमुद्या निर्माणं स्वपूर्वप्रचलिताया अष्टादशसहस्र (१८००) श्लोकसंख्यापरिमितायाः 'प्रक्रियाकौमुद्या' ईषदूनं विधाय द्वादशसहस्र (१२००) श्लोकसंख्या परिमिता विहिता । तथैव वरदराजेनापि मध्यकौमुद्या निर्माणं स्वगुरुरचित-सिद्धान्तकौमुद्याश्चतुर्थांशं श्लोकमानेन (३२५०) संख्यासंकल्प्य विहितम्, यस्य संकेतस्तेन स्वयं दत्तः–

**कृतिर्वरदराजस्य मध्यसिद्धान्तकौमुदी ।**
**तस्याः संख्या तु विज्ञेया खवाणं करवह्निभिरिति ॥ (३२५०)**

**– पुरुषोत्तम सापकोटा**

# विषयसूची

ॐ

# मध्यसिद्धान्तकौमुदी

## (संज्ञाप्रकरणम्)

नत्वा(१) वरदराजः श्रीगुरून् भट्टोजिदीक्षितान् ।
करोति पाणिनीयानां मध्यसिद्धान्तकौमुदीम् ॥

### (श्रीशिवसूत्राणि । वर्णसमाम्नायः)

अ(२) इ उण् । ऋ लृक् । ए ओङ् । ऐ औच् । ह य व रट् । लण् (३) । ञ म ङ ण नम् । झ भञ् । घ ढ धष् । ज ब ग ड दश् । ख फ छ ठ थ च ट तव् । क पय् । श ष सर् । हल् ।

इति (४) माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि । एषामन्त्या इतः । हकारादिष्वकार (५) उच्चारणार्थः । लण्मध्ये (६) त्वित्संज्ञकः ।

---

(१) ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरणीयमिति शिष्टपरम्परामनुसृत्य ग्रन्थकारः पण्डितवरो वरदराजो गुरुमेव प्रणमति 'गुरुरेव परं ब्रह्म' इति कथनानुसारम् ।

(२) अत्र संहिताया अविवक्षणात् सन्ध्यभावः, स्पष्टप्रतिपत्तये प्रकृतिभावाद्वा न सन्धिः ।

(३) अ इ उण् इत्यत्र प्रथमणकारः, लण् इत्यत्र द्वितीयणकारः । अत्र अण् ग्रहणेषु इण् ग्रहणेषु च सन्देहः अतः सामान्यत इदृशी व्यवस्था वर्तते–अण्रूपेण पूर्वणकारस्य ग्रहणम्, इण्रूपेण परणकारस्य ग्रहणम् । तथा चोक्तम्–

परेणैवेण्ग्रहाः सर्वे पूर्वेणैवाण्ग्रहा मताः ।
ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु ॥ इति ॥

(४) एतानि सूत्राणि महेश्वरादागतानीति नन्दिकेश्वरकारिकायां स्पष्टमुक्तम्–

नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।
उद्धर्तुकामः सनकादिसिद्धान् एतद्विमर्शे शिवसूत्रजालम् ।

अन्यत्राप्युक्तम् – येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ इति॥

(५) 'न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति' इति भाष्यात् ।

(६) 'लण्' इति सूत्रेऽकार इत्संज्ञको न तूच्चारणमात्रार्थः ।

हकारो द्विरुपात्तोऽयमटि शल्यपि वाञ्छता ।
अर्हेणा(१) धुक्षदित्यत्र द्वयं सिद्धं भविष्यति ॥

**हलन्त्यम् १।३।३**

उपदेशेऽन्त्यं हलित्स्यात् । उपदेश आद्योच्चारणम् । सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र ।

**अदर्शनं लोपः १।१।६०**

प्रसक्तस्यादर्शनं(२) लोपसंज्ञं स्यात् ।

**तस्य लोपः १।३।६**

तस्येतो लोपः स्यात् । णादयोऽणाद्यर्थाः(३) ।

**आदिरन्त्येन सहेता १।१।७१**

अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् । यथा अण् इति अ इ उ वर्णानां संज्ञा · एवमच्, हल्, अल् इत्यादयः ।

**ऊकालोऽज्झ्रस्वदीर्घप्लुतः(४) १।२।२७**

उश्च ऊश्च ऊ३ श्च वः, वां(५) काल इव कालो यस्य सोऽच् क्रमाद्ध्रस्वदीर्घप्लुतसंज्ञः स्यात् । स प्रत्येकमुदात्तादिभेदेन त्रिधा ।

**उच्चैरुदात्तः १।२।२९**

ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् ।

**नीचैरनुदात्तः १।२।३०**

ताल्वादिषु सभागेषु स्थानेष्वधोभागे निष्पन्नोऽजनुदात्तसंज्ञः स्यात् ।

---

(१) 'अर्हेण' अत्र णत्वप्रापणाय, 'अधुक्षत्' इत्यत्र क्सप्रापणाय च हकारस्य द्विवारोच्चारणम् । द्विवारोच्चारणे तु तस्य अट्प्रत्याहारे शल्प्रत्याहारे चान्तर्गतत्वात् णत्वक्सयोः प्राप्तिरित्यर्थः ।

(२) उच्चार्यत्वेन प्राप्तस्येत्यर्थः ।

(३) अइउण्, ऋलृक् इत्यादिवर्णसमाम्नायस्यान्ते पठिता णकारककारादयोऽणाद्यर्थाः = अण्, अक् इत्यादिप्रत्याहारसिद्धयर्था ज्ञेयाः ।

(४) उकालः, अच्, ह्रस्वदीर्घ प्लुतः–इति पदच्छेदः ।

(५) 'वाम्' इति षष्ठ्या बहुवचनम् ।

## समाहारः स्वरितः १।२।३१

उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच् स्वरितसंज्ञः स्यात्। स (१) नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा ।

## मुखनासिकावचनोऽनुनासिकः १।१।८

मुख–सहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात्। तदित्थम् (२) अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः लृवर्णस्य द्वादश, तस्य दीर्घाभावात्। एचामपि द्वादश, तेषां ह्रस्वाभावात् ।

## तुल्यास्यप्रयत्नं (३) सवर्णम् १।१।९

ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात्। (ऋ–लृवर्णयोर्मिथः सावर्ण्यं वाच्यम्)। अ–कु–हविसर्जनीयानां कण्ठः। इ–चु–य–शानां तालु। ऋ–टु–र–षाणां मूर्धा। लृ–तु–ल–सानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञ–म–ङ–ण–नानां नासिका च। एदैतो कण्ठतालु। ओदौतोः कण्ठोष्ठम्। वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य जिह्वामूलम्। नासिकाऽनुस्वारस्य। इति स्थानानि ।

---

(१) भेदविवरणम्

| अ इ उ ऋ लृ | अ इ उ ऋ ए ओ ऐ औ | अ इ उ ऋ लृ ए ओ ऐ औ |
|---|---|---|
| ह्रस्वभेदाः | दीर्घभेदाः | प्लुतभेदाः |
| १. उदात्तानुनासिकः | ७. उदात्तानुनासिकः | १३. उदात्तानुनासिकः |
| २. उदात्ताननुनासिकः | ८. उदात्ताननुनासिकः | १४. उदात्ताननुनासिकः |
| ३. अनुदात्तानुनासिकः | ९. अनुदात्तानुनासिकः | १५. अनुदात्तानुनासिकः |
| ४. अनुदात्ताननुनासिकः | १०. अनुदात्ताननुनासिकः | १६. अनुदात्ताननुनासिकः |
| ५. स्वरितानुनासिकः | ११. स्वरितानुनासिकः | १७. स्वरितानुनासिकः |
| ६. स्वरिताननुनासिकः | १२. स्वरिताननुनासिकः | १८. स्वरिताननुनासिकः |

(२) ह्रस्व–दीर्घ–प्लुत–उदात्त–अनुदात्त–स्वरित–अनुनासिक– अननुनासिकभेदादित्यर्थः।

(३) आस्ये=मुखे, भवम् आस्यम्, प्रकृष्टो यत्नः प्रयत्नः । स च द्विविधः, आभ्यन्तरो बाह्यश्च।

यत्नो (१) द्विधा–आभ्यन्तरो बाह्यश्च। आद्यः पञ्चधा। स्पृष्टेषत्स्पृष्टेषद्विवृत-विवृत-संवृतभेदात्। तत्र स्पृष्टं प्रयत्नं स्पर्शानाम्। ईषत्स्पृष्टमन्तः स्थानाम्। ईषद्विवृतमूष्मणाम्। विवृतं स्वराणाम्। ह्रस्वस्यावर्णस्य (२) प्रयोगे संवृतम्। (३) प्रक्रिया–दशायां तु विवृतमेव। (४) बाह्यप्रयत्नस्त्वेकादशधा–विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति। खरो विवाराः श्वासा अघोषाश्च। हशः संवारा नादा

(१) आभ्यन्तरप्रयत्नकोष्टकम्

| स्पृष्टम् | ई. स्पृ. | ई. वि. | विवृतम् | संवृतम् |
|---|---|---|---|---|
| क. च. त. ट. प. | य. | श. | अ. ए. | ह्रस्वः |
| ख. छ. ठ. थ. फ. | र. | ष. | इ. ओ. | 'अः' |
| ग. ज. ड. द. ब | ल. | स. | उ. ऐ. | प्रयोगे |
| घ. झ. ढ. ध. भ. | व. | ह. | ऋ. औ. | |
| ङ. ञ. ण. न. म. | | | लृ. | |

बाह्यप्रयत्न कोष्ठकम्

| विवारः, श्वासः, अघोषः | संवारः, नादः, घोषः | अल्पप्राणः | महाप्राणः | उदात्तः, अनुदात्तः, स्वरितः |
|---|---|---|---|---|
| क. ख. श. | ग. घ. ङ. य. | क. ग. ङ. य. | ख. घ. श. | अ. ए. |
| च. छ. ष. | ज. झ. ञ. व. | च. ज. ञ. व. | छ. झ. ष. | इ. ओ. |
| ट. ठ. स. | ड. ढ. ण. र. | ट. ड. ण. र. | ठ. ढ. स. | उ. ऐ. |
| त. छ. | द. ध. न. ल. | त. द. न. ल. | थ. ध. ह. | ऋ. औ. |
| प. फ. | ब. भ. म. | प. ब. म. अ. | फ. भ. | लृ. |
| | | इ. उ. ऋ. लृ. | | |
| | | ए. ओ. ऐ. औ. | | |

सर्वेषां वर्णानां प्रत्येकं चत्वारो बाह्यप्रयत्नाः

(२) व्यवहारसमये।

(३) व्याकरणरीत्या शब्द साधनसमये इत्यर्थः।

(४) बाह्यत्वं–वर्णोत्पत्त्युत्तर जातत्वम्।

घोषाश्च । वर्गाणां प्रथम–तृतीय–पञ्चमा यणश्चाल्पप्राणाः । वर्गाणां द्वितीय–चतुर्थौ शलश्च महाप्राणाः । कादयो मावसानाः स्पर्शाः । यणोऽन्तःस्थाः । शषसहा ऊष्माणः । अचः स्वराः । ≍क≍ख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः । ≍प≍फ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः । 'अं' (१) अः इत्यचः परावनुस्वारविसर्गौ ।

## अणुदित्सवर्णस्य चाप्रत्ययः १।१।६९

अविधीयमानोऽण् (२) उदिच्च सवर्णस्य संज्ञा स्यात् । (३) अत्रैवाण् परेण णकारेण । कु चु टु तु पु एते उदितः । तदवम्–अ इत्यष्टादशानां संज्ञा । तथेकारोकारौ । ऋकारस्त्रिंशतः (४) । एवं लृकारोऽपि । एचो द्वादशानाम् । अनुनासिकाऽननुनासिकभेदेन य व ला द्विधा । तेनाऽननुनासिकास्ते द्वयोर्द्वयोः संज्ञा ।

## परः सन्निकर्षः संहिता १।४।१०९

वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात् ।

## हलोऽनन्तराः (५) संयोगः १।१।७

अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः ।

## सुप्तिङन्तं (६) पदम् १।४।१४

सुबन्तं तिङन्तं च पदसंज्ञं स्यात् ।

## ॥ इति सन्ध्युपयोगिसंज्ञाप्रकरणम् ॥

---

(१) अनुस्वारविसर्गौ अचः परौ भवत इत्यस्योदाहरणमेतत् ।

(२) प्रतीयते विधियते इति प्रत्ययः, विधीयमानः, स न भवतीति अप्रत्ययोऽविधीयमानः ।

(३) अस्मिन्नेव सूत्रे अण् पदेन परेण णकारेण गृह्यते, अन्यत्र पूर्वेण णकारेण, इण्ग्रहणन्तु सर्वत्र परेणैव ।

(४) ऋलृवर्णयोः सावर्ण्यादिष्टादश– ऋकारभेदाः, द्वादश लृकारस्येति त्रिंशत् ।

(५) अव्यवहिता विजातीयव्यधानरहिता इति यावत् ।

(६) 'द्वन्द्वान्दौ द्वन्द्वमध्ये द्वन्द्वान्ते च श्रूयमाणं पदं प्रत्येकमभि सम्बध्यते' इति नियमात् सुबन्तं तिङन्तं च शब्दस्वरूपमित्यर्थः । 'रामः' इति सुबन्तस्य, भवति 'इति तिङन्तस्योदाहरणम् ।

## अभ्यासः

(१) मध्यसिद्धान्तकौमुदी केन प्रणीता ?

(२) मध्यकौमुद्या निर्माणं किमर्थं कृतम् ?

(३) कानि शिवसूत्राणि ? सूत्रान्तर्गतेषु हकारादिवर्णेष्वकारस्य उच्चारणं किमर्थम् ?

(४) ह य व रट् इत्यत्र, हल् इत्यत्र च द्विवारं हकारोच्चारणं किमर्थम् ?

(५) उदात्ता–नुदात्त–स्वरितेषु कीदृशो भेदः

(६) ऋ लृ वर्णयोः कतिविधो भेदः ?

(७) सवर्णसंज्ञा, अनुनासिकसंज्ञा, संहितासंज्ञा, पदसंज्ञाविधायकसूत्राणि कानि ?

(८) अ–इ–उ–क–च–ट–त–प–ऐ–औ–एषां वर्णानां स्थानानि लिखत।

(९) बाह्यप्रयत्नस्य कति भेदाः ? के च ते ?

(१०) अग्रेलिखितानां वर्णानां प्रयत्नान् लिखत
–क–य–श–ह ।

(११) य व लाः कतिविधाः ?

# अथ अच्-सन्धिः

**इको यणचि (१) ६।१।७७**

इकः स्थाने यण् स्यादचि संहितायां विषये । सुधी उपास्य इति स्थितं ।

**तस्मिन्निति निर्दिष्टे पूर्वस्य १।१।६६**

सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य ज्ञेयम् ।

**स्थानेऽन्तरतमः १।१।५०**

प्रसङ्गे सति सदृशतम आदेशः स्यात् । सुध्य् उपास्य इति जाते ।

**अनचि च ८।४।४७**

अचः परस्य यरो द्वे वा स्तो न त्वचि । इति धस्य द्वित्वम् ।

**झलां जश् झशि ८।४।५३**

झलां जश् स्यात् झशि परे । इति पूर्व धस्य दः ।

**संयोगान्तस्य लोपः ८।२।२३**

संयोगान्तं यत्पदं तस्य लोपः स्यात् ।

**अलोऽन्त्यस्य १।१।५२**

षष्ठीनिर्दिष्टोऽन्त्यस्यादेशः स्यात् । इति यलोपे प्राप्ते । **(यणः प्रतिषेधो वाच्यः)**
सुद्ध्युपास्यः । मद्ध्वरिः । धात्त्रंशः । लाकृतिः ।

---

(१) इ–उ–ऋ–लृ एषां स्थाने य–व—र ल एते आदेशा भवन्तीत्यर्थः । तथा च

सुधी + उपास्यः = सुद्ध्युपास्यः द्वित्वाभावे सुध्युपास्यः
मधु + अरिः = मद्ध्वरिः " मध्वरिः
धातृः + अंश = धात्त्रंशः " धात्रशः
लृ + आकृतिः = लाकृतिः।

एवं — गौरी + आगच्छति = गौर्यागच्छति
कुरु + इदम् = कुर्विदम्
मातृ + आज्ञा = मात्राज्ञा
लृ + आकारः = लाकारः, इत्यादिरूपेणान्ये प्रयोगा अपि ज्ञेयाः।

**एचोऽयवायावः (१) ६।१।७८**

एचः क्रमात् अय्, अव्, आय्, आव्, एते स्युरचि ।

**यथासंख्यमनुदेशः समानाम् १।३।१०**

समसम्बन्धी विधिर्यथासंख्यं स्यात् । हरये । विष्णवे । नायकः । पावकः ।

**वान्तो यि प्रत्यये ६।१।७९**

यादौ प्रत्यये परे ओदौतोरवावौ स्तः । गव्यम् (२) । नाव्यम् । **(अध्वपरिमाणे च)** गव्यूतिः (३) ।

**धातोस्तन्निमित्तस्यैव ६।१।८०**

यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैव नान्यस्य । लव्यम्(४) । अवश्यलाव्यम् । तन्निमित्तस्य किम् ? ओयते । औयत ।

**क्षय्यजय्यौ शक्यार्थे ६।१।८१**

यान्तादेशनिपातनार्थमिदम् । क्षय्यम्(५) । जय्यम् । शक्यार्थे किम् ? क्षेतुं जेतुं योग्यं क्षेयं=पापं, जेयं=मनः ।

**क्रय्यस्तदर्थे ६।१।८२**

क्रेतारः क्रीणीयुरिति बुद्धया आपणे प्रसारितं क्रय्यम् । क्रेयमन्यत्(६) । क्रयणार्हमित्यर्थः ।

---

(१) ए–ओ–ऐ–औ एषां क्रमेण अय्–अव्–आय्–आव् एते आदेशा भवन्तीत्यर्थः।
तेन हरे + ए = हरये । विष्णो + ए = विष्णवे
नै + अकः = नायकः । पौ + अकः = पावकः
एवं—ने + अति = नयति भो + अति = भवति
वटो + ऋक्षः = वटवृक्षः ।
नौ + इकः = नाविकः । भौ + उकः = भावुक इत्यादि प्रयोगा ज्ञेयाः ।
(२) गव्यम् — गो + यम् । अवश्यलाव्यम् – अवश्यलौ + यम्
नाव्यम् — नौ + यम् ।
(३) गव्यूतिः — गो + यूतिः । जय्यम् — जे + यम्
(४) लव्यम् — लो + यम् ।
(५) क्षय्यम् — क्षे + यम् ।
(६) क्रेयमन्यत् = क्रयणार्हं गृहे संकलितं धान्यादिकमित्यर्थः ।

**अदेङ्गुणः (१) १।१।२**

अदेङ च गुणसंज्ञः स्यात् ।

**तपरस्तत्कालस्य १।१।७०**

तः परो यस्मात्तात्परो वा उच्चार्यमाणो वर्णः समकालस्यैव संज्ञा स्यात् ।

**आद्गुणः ६।१।८७**

अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात्। उपेन्द्रः (२)। रमेशः। गङ्गोदकम्।

**उपदेशेऽजनुनासिक इत् १।३।२**

उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात्। प्रतिज्ञानुनासिक्याः (३) पाणिनीयाः। लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा।

**उरण् रपरः १।१।५१**

ऋ इति त्रिंशतः संज्ञेत्युक्तं तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते। कृष्णर्द्धिः (४) । तवल्कारः ।

**लोपः शाकल्यस्य ८।३।१९**

अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोपोऽशि परे ।

**पूर्वत्रासिद्धम् ८।२।१**

अधिकारोऽयम्। तेन सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम्। हर इह (५) । विष्ण इह। हरयिह। विष्णविह।

---

(१) 'अ' इति ह्रस्वस्य, 'ए-ओ' इति द्विमात्रस्यैव गुणसञ्ज्ञा इत्यर्थः ।

(२) उप + इन्द्रः, रमा + ईशः, गङ्गा + उदकम्। एवं गज + इन्द्रः = गजेन्द्रः सूर्य + उदयः = सूर्योदयः, परीक्षा + उत्सुकः = परीक्षोत्सुकः। इत्यादयः प्रयोगा अपि ज्ञेयाः।

(३) 'अयमेवम्' इति कथनं प्रतिज्ञा, सा च प्रतिज्ञा व्यवहारतोऽनुमेया ।

(४) कृष्णर्द्धिः — कृष्ण + ऋद्धिः
तवल्कारः — तव + लृकारः
एवं— वसन्त + ऋतुः = वसन्तर्तुः
राजा + ऋषिः = राजर्षिः
मम + लृकारः = ममल्कारः, इत्यादयः प्रयोगा ज्ञेयाः।

(५) हरे + इह, विष्णो + इह। पूर्वत्रासिद्धम् इति सूत्रेण यकारवकारयोर्लोपपक्षे। लोपाभावे तु हरयिह, विष्णविह इति।

## वृद्धिरादैच् १।१।१

आदैच्च वृद्धिसंज्ञः स्यात् ।

## वृद्धिरेचि ६।१।८८

आदैचि परे वृद्धिरेकादेशः । गुणापवादः । कृष्णैकत्वम् (१) । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ।

## एत्यधत्यूठ्सु ६।१।८९

अवर्णादिजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् । पररूपगुणापवादः । उपैति (२) । उपैधते । प्रष्ठौहः । एजाद्योः किम् ? उपेतः । मा भवान्प्रेदिधत् । (**स्वादिरेरिणोः (३)**) स्वैरम् । स्वैरी । स्वैरिणी । (**अक्षादूहिन्यामुपसंख्यानम् (४)**) अक्षौहिणी सेना । (**प्रादूहोढोढ्येषैष्येषु (५)**) प्रौहः । प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः । (**ऋते च (६)** तृती-

---

(१) आ 'आर' 'आल्' ऐ औ एते वृद्धिसंज्ञका इत्यर्थः ।
कृष्ण + एकत्वम् = कृष्णैकत्वम् । गङ्गा + ओघः = गङ्गौघः देव + ऐश्वर्यम् = देवैश्वर्यम् । कृष्ण + औत्कण्ठम् = कृष्णौत्कण्ठयम् । एवं – पञ्च + एते पञ्चैते, तण्डुल + ओदनम् = तण्डुलौदनम्, माधव + एधनम् = माधवैधनम्, राम + औत्सुक्यम् = रामौत्सुक्यम् इत्यादय प्रयोगा अपि ज्ञेयाः ।

(२) एत्ये . . . . .
उप + एति      एवम् – अप + एति = अपैति
उप + एधते      अव + एधसे = अवैधसे
प्रष्ठ + ऊहः      विश्व + ऊहः = विश्वौहः
उपेतः – 'उप + इतः' अत्र एतिर्न एजातिः, अतो न वृद्धिः, किन्तु गुणः ।
'मा भवान् प्र + इतिधत्' अत्रापि एधतिर्नास्ति – एजादिः, अतो न वृद्धिः, किन्तु, गुणः ।

(३) स्व + इरम्
स्व + इरि

(४) अक्ष + उहिनी, पूर्वपदात्संज्ञायामिति णत्वम् ।

(५) प्र + ऊहः, प्र + ऊढः प्र + ऊढिः, प्र + एषः, प्र + एष्यः

(६) सुख + ऋतः
परम + ऋतः (अर् गुणः)

यासमासे) सुखेन ऋतः सुखार्तः । तृतीयेति किम् ? परमर्तः । ((१) प्र-वत्सतर-कम्बल-वसनार्णदशानामृणे) प्रार्णमित्यादि ।

**उपसर्गाः क्रियायोगे १।४।५९**

प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः । प्र । परा । अप । सम् । अनु । अव । निस् । निर् । दुस् । दुर् । वि । आङ । नि । अधि । अपि । अति । सु । उत् । अभि । प्रति । परि । उप । एते प्रादयः ।

**भूवादयो धातवः १।३।१**

क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ।

**उपसर्गादृति धातौ ६।१।९१**

अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । प्रार्च्छति (२)।

**वा सुप्यापिशलेः ६।१।९२**

आदुपसर्गादृकारादौ सुब्धातौ परे वृद्धिर्वा । आपिशलिग्रहणं पूजार्थम् ।

**अचोरहाभ्यां द्वे ८।४।४६**

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । इति प्राप्ते ।

**शरोऽचि ८।४।४९**

द्वे न । प्रार्षभीयति (३) । प्रर्षभीयति ।

**एङि पररूपम् ६।१।९४**

आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः । प्रेजते (४) । उपोषति ।

---

(१) प्र + ऋणम्, वत्सतर + ऋणम्, कम्बल + ऋणम्, वसन + ऋणम्, ऋण + ऋणम्, दश + ऋणम्; सर्वत्र आर् वृद्धिः ।

(२) प्र + ऋच्छति, 'प्र' इत्यस्योपसर्गसंज्ञा, ऋच्छतीत्यस्य धातुसंज्ञा, ततः 'आर्' वृद्धिः ।

(३) प्रार्षभीयति – प्र + ऋषभीयति, 'प्र' इत्यस्योपसर्गसंज्ञा, ऋषभीयतीत्यस्य धातुसंज्ञा । वैकल्पिके वृद्धिपक्षे – प्रार्षभीयति वृद्ध्यभावपक्षे अर्गुणे प्रर्षभीयति ।

(४) प्र + एजते
उप + ओषति, एवं उप + एषयति = उपेषयति, प्र + एषयति = प्रेषयति, अव + ओषति = अवोषति इत्यादयोऽपि ज्ञेयाः । वृद्ध्यपवादा एते प्रयोगाः ।

**अचोऽन्त्यादि टि १।१।६४**

अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् । (**शकन्ध्वादिषु पररूपं वाच्यम्**)। (**तच्च टेः** ( १ ) )। शकन्धुः । कर्कन्धुः । कुलटा । सीमन्तः केशवेशे । सीमन्तोऽन्यः । मनीषा । हलीषा । लाङ्गलीषा । पतञ्जलिः । सारङ्गः पशुपक्षिणोः । सारङ्गोऽन्यः । आकृतिगणोऽयम् । मार्त्तण्डः । (**एवे चानियोगे** (२) ) क्वेव भोक्ष्यसे। अनियोगे किम् ? तवैव । (**ओत्वोष्ठयोः समासे वा**) स्थूलोतुः (३) । स्थूलौतुः । बिम्बोष्ठः । बिम्बौष्ठः । समासे किम् ? तवौष्ठः ।

**ओमाङोश्च ६।१।९५**

ओमि आङि चात्परे पररूपमेकादेशः स्यात् । शिवायोन्नमः (४) । शिव आ इहि इति स्थिते । शिव एहि । शिवेहि ।

**अकः सवर्णे दीर्घः ६।१।१०१**

अकः सवर्णेऽचि परे दीर्घ एकादेशः स्यात्। दैत्यारिः (५) । श्रीशः । विष्णूदयः । (**ऋति सवर्णे ऋ वा**) । होतॄकारः । होतृकारः ।

---

(१) शक + अन्धुः, कर्क + अन्धुः, कुल + अटा, सीम् (न्) + अन्तः = सीमन्तः (केशवेशार्थे) तद्भिन्नेऽर्थे सीमान्तः । मनस् + ईषा, हल + ईषा, लाङ्गल + ईषा, पतत् + अञ्जलिः, सार + अङ्गः, मृत + अण्ड, पररूपम्, ततः अण् प्रत्ययः आदि वृद्धिः ।

(२) अनियोगः अनिर्धारणम् । क्व + एव भोक्ष्यते, तव + एव, अत्र निर्धारणं, अत एव वृद्धिः ।

(३) स्थूल + ओतुः, बिम्ब + ओष्ठः, समासे तु न पररूपम् किन्तु वृद्धिः ।

(४) शिवाय + ओं नमः,
शिवेहि – शिव + आ + इहि इति स्थितिः । अत्र धातूपसर्गकार्यस्यान्तरङ्गत्वात् 'आद्गुणः' इति सूत्रेण गुणे 'शिव + एहि' इत्यवस्थायां बहिरङ्गकार्यत्वान्न दीर्घः किन्तु पुनरपि गुणः 'शिवेहि' इति ।
शिवेहिवत् – कृष्णेहि, अवेहि इत्यादयोऽपि प्रयोगा ज्ञेयाः ।

(५) दैत्य + अरिः, विष्णु + उदयः, श्री + ईशः, होतृ + ऋकारः ।
एवं खर + अरिः = खरारिः, भानु + उदयः = भानूदयः, लक्ष्मी + ईशः = लक्ष्मीश इत्यादयोऽपि प्रयोगा ज्ञेयाः ।

**एङः पदान्तादति ६।१।१०६**

पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव(१) । विष्णोऽव ।

**सर्वत्र विभाषा गोः ६।१।१२२**

लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः पदान्ते । गो अग्रम्(२) । गोऽग्रम्। एङन्तस्य किम् ? चित्रग्वग्रम् । पदान्तस्य किम् ? गोः ।

**अनेकाल् शित्सर्वस्य १।१।५५**

इति प्राप्ते ।

**ङिच्च १।१।५३**

ङिदनेकालप्यन्त्यस्यैव स्यात् ।

**अवङ् स्फोटायनस्य ६।१।१२३**

पदान्ते एङन्तस्य गोरवङ् वा स्यादचि । गवाग्रम् , पदान्ते किम् ? गवि । व्यवस्थित(३)विभाषयागवाक्षः ।

**इन्द्रे च ६।१।१२४**

गोरवङिन्द्रे । गवेन्द्रः(४) ।

**दूराद्धूते च (५) ८।२।८४**

दूरात्सम्बोधने वाक्यस्य टेः प्लुतो वा ।

## (अथ प्रकृतिभावः)

**प्लुतप्रगृह्या अचि नित्यम् ६।१।१२५**

एतेऽचि प्रकृत्या स्युः। आगच्छ(६) कृष्ण ३ अत्र गौश्चरति ।

---

(१) हरे + अव, विष्णो + अव, चित्रगु + अग्रम्, गो + अस् ।

(२) गो + अग्रम् इति स्थितिः

प्रकृतिभावे — गो अग्रम्

पूर्वरूपे — गोऽग्रम्

अवङादेशे — गवाग्रम्

(३) विकल्परूपाया अवस्थाया अभावो व्यवस्था गो + अक्षः ।

(४) गो + इन्द्रः– गव + इन्द्रः– गुणे गवेन्द्रः ।

(५) हूतम्=आह्वानम्

(६) आगच्छ कृष्ण ३+अत्र गौश्चरति–इह प्रकृतिभावान्न सवर्णदीर्घः ।

**ह्रस्वं लघु १।४।१०**

**संयोगे गुरु १।४।११**

संयोगे परे ह्रस्वं गुरुसंज्ञं स्यात् ।

**दीर्घं च १।४।१२**

गुरु स्यात् ।

**गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ८।२।८६**

प्लुतो वा। दे ३ वदत्त, देवद ३ त्त, देवदत्त ३। गुरोः किम् ? वकारादकारस्य मा भूत्। अनृतः किम् ? कृष्ण ३। एकैकग्रहणं पर्यायार्थम् ।

**ईदूदेद्द्विवचनं प्रगृह्यम् १।१।११**

ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात्। हरी एतौ(१)। विष्णू इमौ। गङ्गे अमू। (२) मणीवोष्ट्रस्येति तु इवार्थे वशब्दो वाशब्दो वा बोध्यः ।

**अदसो मात् १।१।१२**

अस्मात्परावीदूतौ प्रगृह्यौ स्तः।अमी (३) ईशाः। रामकृष्णावमू आसाते। मात्किम्- ? अमुकेऽत्र। असति माद्ग्रहणे एकारोऽप्यनुवर्तेत।

**चादयोऽसत्त्वे १।४।५७**

अद्रव्यार्थाश्चादयो निपातसज्ञाः स्युः।

**प्रादयः १।४।५८**

एतेऽपि तथा।

**वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।**
**द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥**

लिङ्गसंख्यान्वययोग्यं द्रव्यम् ।

---

(१) हरी+एतौ, विष्णू+इमौ, गङ्गे+अमू एवं धनुषी+एते, द्वौ भानू+उदयेते द्वे कुले+उत्कृष्टे, एते+स्तः—इत्यादयः प्रयोगा अपि ज्ञेयाः ।

(२) मणी+इवेत्यत्र न प्रकृतिभावः, किन्तु दीर्घः ।

(३) अमी+ईशा, रामकृष्णावमू+आसाते, अमुके+अत्र इत्यत्र नप्रकृतिभावः किन्तु पूर्वरूपम् ।

### निपात एकाजनाङ् १।१।१४

एकोऽज् निपात आङ्वर्जः प्रगृह्यः स्यात्। इ इन्द्रः (१)। उ उमेशः। वाक्यस्मरण-योरङित्। आ एवं नु मन्यसे। आ एवं किल तत्। अन्यत्र ङित्। ईषदुष्णम्। ओष्णम्।

### ओत् १।१।१५

ओदन्तो निपातः प्रगृह्यः। अहो ईशाः।

### सम्बुद्धौ शाकल्यस्येतावनार्षे १।१।१६

संबुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे। विष्णो इति। विष्णविति। विष्ण इति।

### मय उञो वो वा ८।३।३३

मयः परस्य उञो वो वा स्यादचि। किमु (२) उक्तम्। किम्वुक्तम्।

### इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६।१।१२७

पदान्ता इको ह्रस्वाः प्रकृत्या च वा स्युरसवर्णेऽचि। ह्रस्वविधिसामर्थ्यान्न स्वर-सन्धिः। चक्रि अत्र, चक्र्यत्र। पदान्ताः किम्? गौर्यौ। (न समासे)। वाप्यश्वः।

### ऋत्यकः ६।१।१२८

ऋति परे पदान्ताः अकः प्राग्वद्वा। ब्रह्म (३) ऋषिः ब्रह्मर्षिः। पदान्ताः किम्? आर्च्छत्।

## ॥ इति अच्सन्धिः प्रकृतिभावश्च ॥

---

(१) इ+इन्द्रः, उ+उमेशः, आ+ एवं नु मन्यसे, आ+एवं किल तत्, आ+ उष्णम्, अहो+ ईशाः विष्णो+ इति प्रगृह्यसंज्ञकपक्षे विष्णो इति, अवादेशे विष्णविति, विष्ण इति।

(२) किमु + उक्तम्
चक्री + अत्र
गौरी + औ = यण्, गौर्यौ।

(३) ब्रह्मा+ऋषिः, आ+ऋच्छत्, आटश्चेति वृद्धिः।

## अभ्यासः

(१) के यण्पद वाच्याः ? के वृद्धिपद वाच्याः ? के च गुणपद वाच्याः ?

(२) 'थानेऽन्तरतमः' इत्यस्य 'यथासंख्यमनुदेश समानामि'त्यस्य चार्थं लिखत।

(३) केषां स्थाने अय् अव् आय् आव्– एते आदेशा भवन्ति ?

(४) 'क्रय्यम्, क्रेयम्' अनयोः पदयोः कीदृशोऽर्थभेदः ?

(५) गुणवृद्धयोः परिभाषासूत्रं लिखत।

(६) यण्दीर्घयोः, गुणवृद्धयोः, वृद्धिपररूपयोः कः कस्य बाधकः ?

(७) निम्नाङ्कितपदानां पदच्छेदं कुरुत

प्रार्णम्, प्राच्छंति, प्रार्षभीयति, शिवेहि, गवाग्रम्, हरी एतौ, अहो ईशाः, ब्रह्मर्षिः।

(८) का व्यवस्थितविभाषा ? किञ्च तदुदाहरणम् ?

(९) एषां साधनरीतिं दर्शयत

विष्णविति, सुखार्तः, शिवायोन्नमः, किम्वुक्तम्, वाप्यश्वः गौर्यौ।

(१०) दीर्घपदवाच्याः के ?

# अथ हल्–सन्धिः

**स्तोः श्चुना श्चुः (१) ८।४।४०**

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः। हरिश्शेते। रामश्चिनोति। सच्चित्। शार्ङ्गिञ्जय।

**शात् ८।४।४४**

शात्परस्य तवर्गस्य श्चुत्वं न स्यात्। विश्नः (२)। प्रश्नः।

**ष्टुना ष्टुः ८।४।४१**

स्तोः ष्टुना योगे ष्टुः। रामष्षष्ठः (३)। रामष्टीकते। पेष्टा। तट्टीका। चक्रिण्ढौकसे।

**न पदान्ताट्टोरनाम् ८।४।४२**

पदान्ताट्टवर्गात् परस्यानामः स्तोः ष्टुर्न स्यात्। षट् सन्तः। षट् ते। पदान्तात्-किम्? ईट्टे। टोः (४) किम्? सर्पिष्टमम् (**अनाम्नवतिनगरीणामुपसंख्यानम्** (५))। षण्णाम्, षण्णवतिः, षण्णगर्यः।

---

(१) सच तुश्चेति समाहार द्वन्द्वः। एकवचनमार्षम्। अत्र स्थान्याऽऽदेशानां यथासंख्यं क्रमनिर्धारणम्। तेन सकारस्य शकारः, तवर्गस्य चवर्गो भवति। उदाहरणानि त्विमानि— हरिस् + शेते, रामस् + चिनोति। सत् + चित्। शार्ङ्गिन् + जय। इति। एवं कृष्णस् + चपलः = कृष्णश्चपलः, नारदस् + शशापः = नारदश्शशापः, ग्रामात् + चलितः = ग्रामाच्चलितः इत्यादयः प्रयोगा अपि बोध्याः।

(२) विश् + नः, प्रश् + नः, अत्र न श्चुत्वम्। विच्छ–प्रच्छ धातुभ्यां नङ्प्रत्ययः।

(३) रामस् + षष्ठः। रामस् + टीकते। पेष् + ता। तत् + टीका। चक्रिन् + ढौकसे इति सन्धिविच्छेदः।

(४) ईट् + ते इति च्छदः, सर्पिष्टमम् अत्र न ष्टुत्वनिषेधः। किन्तु ष्टुत्वमेव, सर्पिष् + तममिति स्थितिः।

(५) नाम् – नवति – नगरी भिन्नानामेव ष्टुत्वनिषेध इति वाच्यमित्यर्थः। तेन षड् + नाम् इत्यत्र परस्य नकारस्य ष्टुत्वेन णत्वम्, पूर्वस्य डकारस्य तु प्रत्यये भाषायां नित्यमित्यनेन अनुनासिके णकारे षण्णामिति। षड् + नवतिः, षड् + नगर्यः इत्यत्रापि ष्टुत्वं यथावत् पूर्वस्य डकारस्य तु 'यरोऽनुनासिकेऽनुनासिको वा' इत्यनेन वैकल्पिकेऽनुनासिके षण्णवतिः, षण्णगर्यः इति।

## तो: षि ८।४।४३

न ष्टुत्वम् । सन् षष्ठः ।

## झलां जशोऽन्ते ८।२।३९

पदान्ते झलां जशः स्युः । वागीशः (१) । चिद्रूपम् ।

## यरोऽनुनासिकेऽनुनासिको वा ८।४।४५

यरः पदान्तस्याऽनुनासिके परेऽनुनासिको वा (२)। एतन्मुरारिः । एतद् मुरारिः। स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्तते । चतुर्मुखः ( ३ ) । (प्रत्यये भाषायां नित्यम्) । तन्मात्रम् (४) । चिन्मयम् ।

## तोर्लि ८।४।६०

परसवर्णः । तल्लयः (५) । विद्वांल्लिखति । नस्यानुनासिको लः ।

## उदः स्था-स्तम्भोः पूर्वस्य ८।४।६१

उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात् ।

## तस्मादित्युत्तरस्य १।१।६७

पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम् ।

---

(१) वाक् + ईशः । चित् + रूपम् ।

(२) एतत् + मुरारिः । एवं वाक् + मधु = वाङमधु । सत् + मनोहरम् = सन्मनोहरम् । उत् + मानम् = उन्मानम्, ऋच् + मन्त्रः = ऋन्मन्त्रः । दधिमुट् + माद्यति = दधिमुण्माद्यति इत्यादयोऽपि प्रयोगाः ज्ञेयाः ।

(३) चत्वारि मुखानि यस्य सः चतुर्मुखः । अत्र समासे लुप्तां विभक्तिमाश्रित्य पदान्तत्वात् यवरट् लण् इत्यादि यर् प्रत्याहारघटितत्वेन यत्वाच्च रेफस्यानुनासिको णकारः कथं न भवतीति शङ्कायामुच्यते – स्थानप्रयत्नाभ्यामन्तरतमे = सदृशतमे चरितार्थः । प्रयुक्तोऽयं विधिः कवलस्थानसदृशे रेफमात्रे न प्रवर्तत इत्यर्थः ।

(४) तत् + मात्रम् । चित् + मयम् । एवं विपत् + मयम् = विपन्मयम्, अप् + मात्रम् = अम्मात्रम्, अप् + मयम् = अम्मयम् इत्यादयोऽपि ज्ञेयाः ।

(५) तत् + लयः । विद्वान् + लिखति । एवं विपत् + लीनः = विपल्लीनः । कुशान् + लाति = कुशाँल्लाति इत्यादयोऽपि ।

## आदेः परस्य (१) १।१।५४

परस्य यद्विहितं तत्तस्यादेर्बोध्यम्। अघोषस्य महाप्राणस्य विवारस्य श्वासस्य सस्य तादृश एव थकारः।

## झरो झरि सवर्णे ८।४।६५

हलः परस्य झरो लोपो वा सवर्णे झरि।

## खरि च ८।४।५५

खरि परे झलां चरः स्युः। इत्युदो दस्य तः। उत्थानम् (२), उत्तम्भनम्।

## झयो होऽन्यतरस्याम् ८।४।६२

झयः परस्य हस्य वा पूर्वसवर्णः। संवारस्य नादस्य घोषस्य महाप्राणस्य हस्य तादृशो वर्गचतुर्थः। वाग्घरिः (३)। वाग्हरिः।

## शश्छोऽटि ८।४।६३

पदान्तात् झयः परस्य शस्य छो वा स्यादटि। तच्छिवः (४)। तच्शिवः। पदान्तात् किम्? विरप्शम्। (छत्वममीति वाच्यम् (५))। तच्छ्लोकेन। अमि किम्? वाक् श्च्योतति।

## मोऽनुस्वारः ८।३।२३

मान्तस्य पदस्यानुस्वारो हलि। हरिं (६) वन्दे। पदस्य किम्? गम्यते (७)।

---

(१) 'अलोऽन्त्यस्य' इत्यस्यापवादोऽयम्।

(२) उत+स्थानम्, उत्+स्तम्भनम्, अत्र स्था इत्यस्य स्तम्भनम् इत्यस्य च सकारस्य स्थाने थकारः, जश्त्व–पूर्वसवर्ण–लोप–चर्त्वानि च कार्याणि।

(३) 'वाक् + हरिः' ककारस्य जश्त्वेन गकारः। एवं तत्+ हानम् = तद्धानम्, सम्पत्+हानिः=सम्पद्धानिः, ककुप्+ह्रासः=ककुब्भासः इत्यादयोऽपि बोध्याः।

(४) तत्+शिवः=तच्छिवः – जश्त्व, श्चुत्व, चर्त्व–छत्वानि कार्याणि। विरप्शम् नात्र पदान्तो झय इति न शस्य छत्वम्।

(५) तत्+श्लोकेन।

(६) हरिम्+वन्दे

(७) गम्यते– अत्र मस्य पदान्तत्वाभावान्नानुस्वारः।

**नश्चापदान्तस्य झलि ८।३।२४**

नस्य मस्य चापदान्तस्य झल्यनुस्वारः। यशांसि(१)। आक्रंस्यते। झलि किम्? मन्यते।

**अनुस्वारस्य ययि परसवर्णः ८।४।५८**

शान्तः(२)। अङ्कितः।

**वा पदान्तस्य ८।४।५९**

त्वङ्करोषि(३), त्वं करोषि।

**मो राजि समः क्वौ ८।३।२५**

क्विबन्ते राजतौ परे समो मस्य म एव स्यात्। सम्राट्(४)।

**हे मपरे वा ८।३।२६**

मपरे हकारे मस्य मो वा। किम्ह्मलयति। किंह्मलयति। (**यवल(६)परे यवला वेति वक्तव्यम्**) किं ह्यः, किँ ह्यः। किह्वलयति, किँ ह्वलयति। किं ह्लादयति। किँह्लादयति।

**नपरे नः ८।३।२७**

नपरे हकारे मस्य नो वा। किँन्हुते(७), किन्हुते।

**ङः सि धुट् ८।३।२९**

ङात्परस्य सस्य धुड्वा।

---

(१) यशान्+सि। आक्रम् + स्यते। एवं वासान् + सि=वासांसि, प्रणम् + स्यते= प्रणंस्यते इत्यादयो बोध्याः।

(२) शाम् + तः, अम् + कितः। एवं अम् + चितः= अञ्चितः, कुम् + ठितः= कुण्ठितः, दाम् + तः दान्तः इत्यादयोऽपि।

(३) त्वम् + करोषि, मोऽनुस्वार इति अनुस्वारः पक्षे परसवर्णः।

(४) सम् + राट्, अज्झीनं परेण संयोज्यम्।

(५) किम् + ह्मलयति, पक्षेऽनुस्वारः।

(६) किम् + ह्यः। किम् + ह्वलयति। किम् + हलादयति।

(७) किम् + न्हुते

**आद्यन्तौ टकितौ १।१।४६**

टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः । षट्त्सन्तः (१) । षट्सन्तः ।

**ङणोः कुक् टुक् शरि ८।३।२८**

ङ्कार – णकारयोः कुक्टुकावागमौ वा स्तः शरि । कुक्-टुकोरसिद्धत्वान्नजश्त्वम् । (चयो द्वितीयाः सरि पौष्कर सादेरिति वाच्यम्(२) । प्राङ् ख्षष्ठः । प्राङ् षष्ठः, । प्राङ् क्षष्ठः । सुगण्ठ्षष्ठः । सुगण्षष्ठः ।।

**नश्च ८।३।३०**

नान्तात्परस्य सस्य धुड्वा । सन्त्सः (३) ।

**शि तुक् ८।३।३१**

नस्य पदान्तस्य शे तुक् वा । सञ्छम्भुः (४) । सञ्च्छम्भुः । सञ्च्शम्भुः । सञ्-शम्भुः ।

**'ञ्छौ ञचछा ञचशा ञशाविति चतुष्टयम् ।**
**रूपाणामिह तुक्–छत्व–चलोपानां विकल्पनात् ।।'**

---

(१) षट् + सन्तः । "धुट्" आगमानन्तरं 'खरि च' इति चर्त्वम् ।

(२) पौष्करसादिर्य आचार्यस्तस्य मते शरि परे चयः (चय प्रत्याहारघटितस्य क च ट त पाम्) खयः=ख छ ठ थ फाः स्युरितिवक्तव्यमित्यर्थः ।
प्राङ+षष्ठः, कुक् आगमे प्राङक् षष्ठः, ककारस्थाने द्वितीयाऽऽदेशे—प्राङ ख् षष्ठः, कुक्पक्षे कष संयोगे क्ष इति क्षत्वे प्राङ क्षष्ठः । विकल्पे प्राङ षष्ठः । एवं सुगण् + षष्ठः, सुगण् ट् षष्ठः, सुगण् ठ् षष्ठः, विकल्पे सुगण्षष्ठः ।

(३) सन्+सः । सनत्सः । एवं विद्यार्थिन् + सहस्व=विद्यार्थिन्त्सहस्व । छात्रान्+स्वापय=छात्रान्त्स्वापय इत्यादि । "धुट्"—आगमानन्तरं चर्त्वम् ।

(४) सन्+शम्भुः, नस्य विकल्पेन तुगागमे सन् त् +शम्भुः, त इत्यस्य श्चुत्वे च—कारे सन्च्+शम्भुः, न इत्यस्य श्चुत्वे ञ्—कारे सञ्च्+शम्भुः, छत्वे सञ्च्छम्भुः, झरो झरीति विकल्पेन च्लोपे सञ्छम्भुः, लोपाभावे सञ्च्-छम्भुः, छत्वाभावे सञ्च्शम्भुः, तुगभावे श्चुत्वमात्रम् सञ्शम्भुरिति ।

**ङमो ह्रस्वादचि ङमुण्नित्यम्(१) ८।३।३२**

ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुट्। प्रत्यङ्ङात्मा। सुगण्णीशः। सन्नच्युतः।

**समः सुटि ८।३।५**

समो रुः सुटि।

**अत्रानुनासिकः पूर्वस्य तु वा ८।३।२**

अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा।

**अनुनासिकात्परोऽनुस्वारः ८।३।४**

अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः।

**खरवसानयोर्विसर्जनीय, ८।३।१५**

खरि अवसाने च पदान्तस्य रेफस्य विसर्गः। (**संपुंकानां सो वक्तव्यः**) सँस्कर्ता(२), संस्कर्ता।

**पुमः खय्यम्परे ८।३।६**

अम्परे खयि पुमो रुः स्यात्। पुँस्कोकिलः। पुंस्कोकिलः(३)।

**नश्छव्यप्रशान् ८।३।७**

अम्परे छवि नान्तस्य पदस्य रुः स्यात्।

---

(१) ङुट्—णुट्—नुट् इति त्रय आगमाः। प्रत्यङ+आत्मा। सुगण्+ईशः। सन्+अच्युतः। एव तिङ+अतिङ=तिङङतिङ। तस्मिन्+इति=तस्मिन्निति। पठन्+एति=पठन्नेति इत्यादयोऽपि प्रयोगा ज्ञेयाः।

(२) सम्+कर्ता 'सम्परिभ्याम्..' इति सुट् सम्+स्कर्ता, मकारस्थाने रुः आदेशे सर्+स्कर्ता, अनुनासिके सँर्+स्कर्ता, पक्षे अनुस्वारागमे—संर्+स्कर्ता, विसर्गे सँः+स्कर्ता, सः+स्कर्ता, विसर्गस्य सत्वे सँस्स्कर्ता, संस्स्कर्ता। इति। एवं सँस्स्कारः, संस्स्कारः, सँस्स्कृतम्, संस्स्कृतम्। आदि।

(३) पुम्+कोकिलः, पूर्ववत् कार्याणि। एवं पुँस्पुत्रः, पुंस्पुत्रः, पुँश्चरित्रम्, पुंश्चरित्रम्, पुँस्तिलकम्, पुंस्तिलकम्, पुँष्टीका, पुंष्टीका आदि।

**विसर्जनीयस्य सः ८।३।३४**

खरि । चक्रिँस्त्रायस्व (१) । चक्रिंस्त्रायस्व । अप्रशान् किम् ? प्रशान्तनोति । पदस्य किम् ? हन्ति । अम्परे किम् ? सन्त्सरूः = खड्गमुष्टिः ।

**नॄन्पे ८।३।१०**

नॄनित्यस्य रुर्वा पे ।

**कुप्वोः ≍क ≍पौ च ८।३।३७**

कवग पवर्गे च परे विसर्गस्य ≍क ≍पौ स्तः । चाद्विसर्गः । नॄँ ≍पाहि । नॄँः पाहि । नॄं ≍पाहि । नॄंः पाहि । नॄन्पाहि (२) ।

**सोऽपदादौ ८।३।३८**

विसर्गस्य सः स्यादपदाद्योः कुप्वोः । (**पाश–कल्प–क–काम्येष्विवितिवाच्यम्**) पयस्पाशम् (३) । पयस्कल्पम् । यशस्काम्यति । (**अनव्ययस्येति वाच्यम्**) प्रातःकल्पम् (**काम्ये रोरेवेति वाच्यम्**) नेह–गीः काम्यति ।

**इणः षः ८।३।३९**

इणः परस्य विसर्गस्य षः स्यात् पूर्वविषये । सर्पिष्पाशम् (४) । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्काम्यति ।

**कस्कादिषु च ८।३।४८**

एष्विण उत्तरस्य विसर्गस्य षः स्यादन्यस्य तु सः । कस्कः (५) । कौतस्कुतः । सर्पिष्कुण्डिका । धनुष्कपालमित्यादि । आकृतिगणोऽयम् ।

---

(१) चक्रिन्+त्रायस्व, अनुनासिकानुस्वारौ पाक्षिकौ चक्रिँस्त्रायस्व, चक्रिंस्त्रायस्व । एवं कस्मिँश्+चित्, कस्मिँश्चित्, भक्ताँस्तारय, भक्तांस्तारय, विद्वाँश्छात्रः, विद्वांश्छात्रः आदि प्रयोगा ज्ञेयाः ।

(२) नॄन्+पाहि, नॄन्+पालयस्व इत्यादावपि अनुनासिक–अनुस्वारागम–विसर्गा-बोध्याः ।

(३) पयः+पाशम्, पयः+कल्पम्, यशः+काम्यति । प्रातः+कल्पम्—अनव्ययविसर्गस्यैवसत्वविवक्षणान्नात्रसत्वम् । गीः काम्यति– उकारानुबन्धरेफस्य विवक्षणान्नात्र विसर्गस्य सत्त्वम् ।

(४) सर्पिः+पाशम्, सर्पिः+कल्पम्, सर्पिः+कम्, सर्पिः+काम्यति ।

(५) कः+कः, कौतः+कुतः सर्पिः+कुण्डिका, धनुः+कपालम् ।

**तस्य परमाम्रेडितम् ८।१।२**

द्विरुक्तस्य परमाम्रेडितं स्यात् ।

**कानाम्रेडिते ८।३।१२**

कान्नकारस्य रुः स्यादाम्रेडिते परे । काँस्कान् (१) । कांस्कान् ।

**छे च ६।१।७३**

ह्रस्वस्य छे तुक् । स्वच्छाया (२) । शिवच्छाया ।

**आङ्माङोश्च ६।१।७४**

तुक् छे । आच्छादयति (३) । माच्छिदत् ।

**दीर्घात् ६।१।७५**

तुक् छे । म्लेच्छति (४) ।

**पदान्ताद् वा ६।१।७६**

दीर्घात्पदान्ताच्छे तुग्वा । लक्ष्मीच्छाया (५) । लक्ष्मीछाया ।

## ॥ इति हल्सन्धिः ॥

### अभ्यासः

(१) शर्ङ्गिञ्जय, पेष्टा, षट्सन्तः, वागीशः, एतन्मुरारिः, तन्मात्रम्–एते प्रयोगाः साधनीयाः ।

(२) विद्वाँल्लिखति, उत्थानम्, वाग्घरिः, तच्छिवः, हरिं वन्दे, शान्तः, एतेषां प्रयोगाणां साधनरीतिं प्रदर्शयत ।

(३) सम्राट्, किंह्यः, षट्त्सन्तः, प्राङ्क्षष्ठः, सञ्च्छम्भुः, प्रत्यङ्ङात्मा–एतेषां प्रयोगाणां साधने विशेषसूत्राणि प्रदर्शनीयानि ।

(४) श्चुत्व, ष्टुत्व, जश्त्व, छत्व, परसवर्ण, धुट्,तुक् – विधायकानि सूत्राणि लेखनीयानि ।

---

(१) कान्+कान्, अनुनासिकानुस्वारकार्याणि ।

(२) स्व+छाया, शिव+छाया ।

(३) आ+छादयति ।

(४) मा+छिदत्, म्ले+छति ।

(५) लक्ष्मी+ छाया ।

(५) सम्+स्कर्ता, चक्रिन्+त्रायस्व, नॄन्+पाहि, सर्पिस्+पाशम्, कान्स्+कान्, शिव+छाया, एषां प्रयोगाणां सिद्धरूपाणि प्रदर्शनीयानि ।

(६) अनाम्नवतिनगरीणाम्, प्रत्यये भाषायाम्, चयो द्वितीयाः शरि, संपुंकानाम्–एतानि वार्तिकानि पूरयित्वा अर्थाश्च लेख्याः ।

## संक्षिप्तानि साधनप्रकाराणामुदाहरणानि

**हरिश्शेते**:– 'हरिस्+शेते' इति स्थिते 'स्तोः श्चुना श्चुः' इति सूत्रेण 'शेते' इति तालव्यशकारयोगे 'हरिस्' इत्यस्य दन्त्यसकारस्य स्थाने 'श' कारे 'हरिश्शेते' इति रूपं सम्पन्नम् ।

**वागीशः**:— 'वाक् + ईशः' इति स्थिते पदान्ते झलि ककारस्थाने जशादेशे प्राप्ते 'स्थानेऽन्तरतमः' इति नियमेन स्थान–साम्याद् 'ग' कारे वागीश इति ।

**उत्थानम्**– 'उत् + स्थानम्' इति स्थिते जश्त्वेन तकारस्य दकारे 'उदः स्थास्तम्भोः पूर्वस्य' इति सूत्रेण प्राप्तस्य पूर्वसवर्णस्य 'तस्मादित्युत्तरस्य' इत्यनेन परस्थाने प्राप्ते 'आदेः परस्य' इत्यनेन 'स्थानेऽन्तरतमः' इति सूत्रसहकारेण विवारस्य श्वासस्य अघोषस्य महाप्राणस्य सस्य स्थाने तादृश एव थकारादेशे 'उद्थ् थानम्' इत्यवस्थायां 'झरो झरि सवर्णे' इति सूत्रेण सवर्णे झरि थकारे परे झरः पूर्व थकारस्य लोपे 'खरि च' इति चर्त्वेन 'द' कारस्य त् कारे उत्थानम् । थलोपाभावे उत् थ् थानम् इति रूपद्वयं सिद्धम् ।

**सँस्कर्ता**:— 'सम् + स्कर्ता' इति स्थिते 'समः सुटि' इति सूत्रेण समः मकारस्य स्थाने 'रुः' आदेशेऽनुबन्धलोपेऽनुनासिकादेशे, पक्षान्तरे 'अनुनासिकात्परोऽनुस्वारः' इत्यनेनानुस्वारागमे 'सँर् स्कर्ता, संर्स्कर्ता, इत्यवस्थायां 'खरवसानयो- र्विसर्जनीयः' इति सूत्रेण पदान्तस्य रेफस्य विसर्गे 'संपुंकानां सो वक्तव्यः' इति वार्तिकेन विसर्गस्थाने नित्यसत्वे 'सँस्स्कर्ता, संस्स्कर्ता' इति रूपद्वयं सिद्धम् ।

# अथ विसर्गसन्धिः

**विसर्जनीयस्य सः ८।३।३४**

खरि । विष्णुस्त्राता (१) ।

**शर्परे विसर्जनीयः ८।३।३४**

शर्परे खरि विसर्गस्य विसर्गो न त्वन्यत् (सकारादि) । कःत्सरुः(२) । घनाघनःक्षोभणः ।

**वा शरि ८।३।३६**

शरि विसर्गस्य विसर्गो वा । हरिः शेते(३) । हरिश्शेते । (**खर्परे शरि वा विसर्गस्य लोपो वक्तव्यः**) । हरिस्फुरति । हरिः स्फुरति ।

## ॥ इति विसर्गसन्धिः ॥

---

(१) विष्णुः + त्राता । एवं छात्रः + तिष्ठति = छात्रस्तिष्ठति ।
गौः + चरति = गौश्चरति । कृष्णः + छिनत्ति = कृष्णश्छिनत्ति ।

(२) कः + त्सरुः, घनाघनः + क्षोभणः । अत्र विसर्ग एव न सकारः ।

(३) हरिः + शेते, पक्षे सत्त्वे 'स्तोश्चुना...' इति शकारे हरिश्शेते । एवं छात्राः + सन्ति = छात्राः सन्ति, छात्रास्सन्ति । रसाः + षट् = रसाः षट् । रसाष्षट् इत्यादयः प्रयोगाः ।

हरिः + स्फुरति, विसर्गलोपपक्षे हरिस्फुरति । पक्षान्तरे हरिः स्फुरति, हरिस्स्फुरति ।

# अथ स्वादिसन्धिः

**स-सजुषो रुः ८।२।६६**

पदान्तस्य सस्य सजुष्शब्दस्य च रुः स्यात् ।

**अतो रोरप्लुतादप्लुते ६।१।११३**

अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । शिवोऽर्च्यः(१) । अतः किम्? देवा अत्र । अतीति किम् ? श्व आगन्ता । अप्लुतात्किम् ? एहि सुश्रोत ३ अत्र स्नाहि(२) । प्लुतस्यासिद्धत्वादतः परोऽयम् । अप्लुतादिति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम् । तपरकरणस्य तु न सामर्थ्यम्, दीर्घनिवृत्त्या चरितार्थत्वात् । अप्लुत इति किम् ? तिष्ठतु पय अ ३ ग्निदत्त ।

**हशि च ६।१।११४**

तथा । शिवो वन्द्यः (३) ।

**भो-भगो अघो-अ-पूर्वस्य योऽशि ८।३।१७**

एतत्पूर्वस्य रोर्यादेशोऽशि । देवा इह(४) । देवायिह । भोस् भगोस् अघोस् इति सान्ता निपाताः, तेषां रुत्वे यत्वे च कृते ।

---

(१) 'शिवस् + अर्च्यः' अत्र रुत्वे कृते उत्वं गुणः पूर्वरूपं च । उत्वं प्रति रुत्वस्याऽसिद्धत्वं न भवति रुत्वमनूद्य उत्वविधानसामर्थ्यात् । एवं शुद्धोऽहम् । बुद्धोऽस्मि । छात्रोऽयम्, इत्यादि ।

(२) अत इति तपरकरणादेव प्लुतस्यापि निवृत्तिसम्भवात् 'अप्लुतादिति' कथनं व्यर्थमितिशङ्कितुराशयः । तत्रोत्तरं वर्तते—'एहि सुश्रोत ३ अत्र स्नाहि ।' अत इति तपरकरणस्य दीर्घनिवृत्या चरितार्थत्वेन प्लुतनिवृत्तौ सामर्थ्याभावात् प्लुतेऽपि रुत्वं मा भूदित्याशयेन अप्लुतादिति ।

(३) शिवस् + वन्द्यः । एवं रामो वदति, छात्रो गच्छति, कृष्णो जयति, काको डीयते, व्यासो ब्रूते इत्यादयः प्रयोगा अपि ज्ञेयाः ।

(४) 'देवास् + इह' रोर्यादेशे 'लोपः शाकल्यस्य' इति विकल्पेन य लोपः । एवं छात्रा आगच्छन्ति, वीरा उत्सहन्ते, देवा एते, धार्मिका वर्धन्ते, भक्ता भजन्ति, याज्ञिका यान्ति, अन्यदि । हल् परत्वे तु हलि सर्वेषामित्यनेन नित्यं यलोपः ।

**व्योर्लघुप्रयत्नतरः शाकटायनस्य(१) ८।३।१८**

अशि पदान्ते ।

**ओतो गार्ग्यस्य ८।३।२०**

ओकारात्परस्य पदान्तस्यालघुप्रयत्नस्य यस्य नित्यं लोपः । भो अच्युत । लघुप्रयत्न-पक्षे – भोयच्युत(२) । पदान्तस्य किम् ? तोयम् ।

**हलि सर्वेषाम् ८।३।२२**

भो–भगो–अघो–अ–पूर्वस्य यस्य नित्यं लोपः स्याद्धलि । भो देवाः (३) । भगो नमस्ते । अघो याहि । देवा यान्ति ।

**रोऽसुपि ८।३।६९**

अह्नो रेफादेशो न तु सुपि । अहरहः(४) । अहर्गणः । असुपि किम् ? अहोभ्याम् । अत्र 'अहन्' इति रुत्वम् । (**रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्**) । अहो रूपम्(५) । गत-महो रात्रिरेषा । एकदेशविकृतन्यायेनाहोरात्रः । अहोरथन्तरम् (**अहरादीनां पत्यादिषु वा रेफः**) । विसर्गापवादः । अर्हपतिः(६) । गीर्पतिः । धूर्पतिः । पक्षे विसर्गोपध्मानीयौ ।

**रो रि ८।३।१४**

रेफस्य रेफे परे लोपः ।

**ढ्रलोपे पूर्वस्य दीर्घोऽणः ६।३।१११**

ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः स्यात् । पुना रमते(७) । हरी रम्यः । शम्भू राजते ।

---

(१) यस्योच्चारणे जिह्वाग्रोपाग्रमूलानां शैथिल्यं जायते स लघूच्चारणः ।

(२) भोस् + अच्युतः ।

(३) भोस् + देवाः, भगोस् + नमस्ते अघोस् + याहि, देवास् + यान्ति, एषु नित्यं यलोपः ।

(४) अहन् + अहः, अहन् + गणः ।

(५) अहन् + रूपम्, गतमहन् + रात्रिरेषा, अहन् + रथन्तरम् ।

(६) अहन् + पतिः, गीर् + पतिः, धूर् + पतिः ।

(७) पुनस् + रमते, हरिस् + रम्यः, शम्भुस् + राजते एवं निर् + रसः = नीरसः, लिढ् + ढे = लीढे, प्रातर् + रमते = प्राता रमते आदि ।

## ढो ढे लोपः ८।३।१३

लीढः(१) । अणः किम्? तृढः । वृढः । मनस् + रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रोरीति लोपे च प्राप्ते ।

## विप्रतिषेधे परं कार्यम् १।४।२

तुल्यबलविरोधे परं कार्यं स्यात् । इति लोपे प्राप्ते । पूर्वत्रासिद्धमिति रोरित्यस्यासिद्धत्वादुत्वमेव । मनोरथः ।

## एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ६।१।१३२

अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि नतु नञ्समासे । एष विष्णुः । स शम्भुः । अको किम्? एषको रुद्रः । अनञ् समासे किम्? असः शिवः । हलि किम्? एषोऽत्र ।

## सोऽचि लोपे चेत्पादपूरणम् ६।१।११४

स इत्यस्य सोर्लोपः स्यादचि, पादश्चेल्लोपे सत्येव पूर्येत । सेमामविड्ढि (३) प्रभृतिम् । सैष दाशरथी रामः ।

## ॥ इति स्वादिसन्धिः ॥

### अभ्यासः

(१) विष्णुस्त्राता, हरिः शेते, शिवोऽर्च्यः, शिवो वन्द्यः, भो अच्युतः– एतेषां साधनरीतिं प्रदर्शयत ।

---

(१) लिह + तस् इत्यत्र 'होढः' इति हकारस्य ढकारे 'झषस्तथोर्धोधः' इति तकारस्य धकारे 'ष्टुना ष्टुः' इति ष्टुत्वेन धकारस्य ढकारे 'लिढ् + ढस्' इति स्थितेऽनेन ढलोपे सति पूर्वेण दीर्घः । अणः किम्? तृढ्+ढः, वृढ् + ढः ।

(२) एषस् + विष्णुः, सस् + शम्भुः– एवम् एष + शोभते, एष + ददाति, स चलति स च इत्यादयोऽपि ज्ञेयाः । एषकस् + रुद्रः, असस् + शिवः, एषस् + अत्र, एवम् एषोऽहम्, सोऽहम् – इत्यादयः ।

(३) सस् + इमामविड्ढि प्रभृतिम् – सलोपानन्तरं गुणः ।
सस् + एष दाशरथी रामः – सलोपानन्तरं वृद्धिः ।
समग्रश्लोकस्तु – सैष दाशरथी रामः, सैष राजा युधिष्ठिरः ।
सैष कर्णो महादानी, सैष भीमो महाबलः ॥ इति ॥

(२) अहरहः, अहोरूपम् अहर्पतिः, पुना रमते, एष विष्णुः, सैष दाशरथी रामः, प्रमुखसूत्रवार्तिकादिनिर्दिश्य निर्दिष्टाः प्रयोगाः साधनीयाः ।

(३) 'अतो रोरप्लुतादप्लुते' इति सूत्रे 'अप्लुतात्' इति पदं, 'रोऽसुपि' अत्र 'असुपि' पदं एतत्तदोः सुलोपः' इत्यादि सूत्रे 'हलि' पदं किमर्थम् ? सोदाहरणं कथयत ।

## साधनरीतेरुदाहरणानि

**देवा इह** :– 'देवास् + इह' इति स्थिते सकारस्य 'स सजुषोरुः' इति सूत्रेण रुत्वे 'भो–भगो –अघो –अ – पूर्वस्य योऽशि' इत्यनेनावर्णपूर्वस्य रोः स्थाने यादेशे 'लोपः शाकल्यस्य' इत्यनेन वैकल्पिके यकारलोपे देवा इह, य लोपाभावे 'देवायिह, इति ।

**मनोरथ** :– मनस् + रथः' इति स्थिते रुत्वे 'मनर् + रथः' इत्यवस्थायां 'हशि च'इत्युत्वे'रोरि' इत्यनेन रेफस्य लोपे च प्राप्ते 'विप्रतिषेधे परं कार्यम्' इति सूत्रण तुल्यबल- विरोधे सति परं कार्यं भवतीति विधानाद् रोरीत्यनेन रेफस्य लोपे प्राप्ते पूर्वत्रासिद्धमित्यस्य नियमेन रोरीत्यस्यासिद्धत्वादुत्वमेव, ततो गुणे मनोरथः' इति ।

# अथाजन्ताः पुंलिङ्गाः

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १।२।४५**

धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ।

**कृत्तद्धितसमासाश्च (१) १।२।४६**

कृत्तद्धितान्तौ समासाश्च तथा स्युः ।

**प्रत्ययः ३।१।२**

आपञ्चमपरिसमाप्तेरधिकारोऽयम् ।

**परश्च ३।१।१**

अयमपि तथा ।

**ङ्याप् प्रातिपदिकात् ४।१।१**

ङ्यन्तादाबन्तात्प्रातिपदिकाच्चेत्यापञ्चमपरिसमाप्तेरधिकारोऽयम् (२) ।

**स्वौजसमौट्छष्टाभ्यांभिस्–ङेभ्यांभ्यस्–ङसि–भ्यांभ्यस् – ङसोसाम् – ङ्योस्सुप् ४।१।१**

ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः । सु औ जस्–प्रथमा । अम् औट् शस्– द्वितीया । टा भ्यां भिस्– तृतीया । ङे भ्यां भ्यस्– चतुर्थी । ङसि भ्यां भ्यस्– पञ्चमी । ङस् ओस्–आम्– षष्ठी । ङि ओस् सुप्– सप्तमी ।

**सुपः १।४।१०३**

सुपस्त्रीणि त्रीणि वचनान्येकश एकवचन–द्विवचन–बहुवचनसंज्ञानि स्युः ।

**द्व्येकयोर्द्विवचनैकवचने १।४।२२**

द्वित्वैकत्वयोरेते स्तः (३) ।

---

(१) कृतः तद्धिताश्च प्रत्ययास्तेन तदन्ता ग्राह्याः । प्रत्ययान्तत्वेनाप्राप्तिस्थले प्रापकं सूत्रमिदम् ।

(२) सूत्रत्रयस्य समुदितोऽयमर्थः ।

(३) एकत्व विवक्षायाम् एकवचनम्, द्वित्वविवक्षायां द्विवचनम् ।

**विरामोऽवसानम् १।४।११०**

वर्णानामभावोऽवसानसंज्ञः स्यात् । रुत्व–विसर्गौ । रामः (१) । (**अयोगवाहानाम-स्योपरि शर्षु चेति वाच्यम्**) । यमानुस्वारविसर्गजिह्वामूलीयोपध्मानीया अयोगवाहाः (२) । तेनेह–विसर्गस्य यत्वादिनचि चेति द्वित्वपक्षे रामः ।

**सरूपाणामेकशेष एकविभक्तौ १।२।६४**

एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ।

**प्रथमयोः पूर्वसवर्णः ६।१।१०२**

अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात् । इति प्राप्ते ।

**नादिचि ६।१।१०४**

आदिचि न पूर्वसवर्णदीर्घः । वृद्धिरेचि । रामौ ।

**बहुषु बहुवचनम् १।४।२१**

**चुटू १।३।७**

प्रत्ययाद्यौ चुटू (३) इतौ स्तः ।

**विभक्तिश्च १।४।१०४**

सुप्तिङौ विभक्तिसंज्ञौ स्तः ।

---

(१) रमन्ते योगिनोऽस्मिन्निति विग्रहवाच्यो रामः = परमात्मा, तदवतारो दाशरथिर्वा । राम शब्दो व्युत्पन्न–अव्युत्पन्नभेदेन द्विविधः । तत्र व्युत्पन्नपक्षे 'कृत्तद्धित समासाश्चे' ति प्रातिपदिकसंज्ञा, अव्युत्पन्नपक्षे 'अर्थवदधातु . . ' अनेन प्रातिपदिकसंज्ञा । रम्–धातोः 'घञ्' प्रत्ययसम्पन्नो रामः – व्युत्पन्नः, अनादिरूपेणार्थबोधने प्रसिद्धोऽ-व्युत्पन्नः । उभयत्र–एकत्वसंख्याविशिष्टबोधने रामः, द्वित्वसंख्याविशिष्टबोधने रामौ, बहुत्वसंख्याविशिष्टबोधने रामाः – इति रूपाणि । द्विवचनबहुवचनस्थले य शिष्यते स लुप्यमानार्थाभिधायीति नियमेन लुप्यमानार्थस्यापि बोधः ।

(२) वर्णसमाम्नाये– नास्ति योगः सम्बन्धो येषां तेऽयोगः, वहन्तीति वाहाः, अयोगाश्च ते वाहाश्चेत्ययोगवाहाः। अथवा,अयुक्ताः = अनुपदिष्टाः, ग्रहणक शास्त्रेणाप्रत्यायिताः प्रयोगं निर्वाहयन्तीत्यन्वर्थिकेयं संज्ञा ।

(३) चुः = चवर्गः (च छ ज झ ञाः) टवर्गश्च टुः = (ट ठ ड ढ णाः) इत्यर्थः ।

**नविभक्तौ तुस्माः १।३।४**

विभक्तिस्थास्तु (१) स–मा नेतः। इति सस्य नेत्वम्। रामाः।

**एकवचनं सम्बुद्धिः २।३।४९**

संबोधने (२) प्रथमाया एकवचनं संबुद्धिसंज्ञं स्यात्।

**यस्मातप्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १।४।१३**

यः प्रत्ययो यस्मात्क्रियते तदादिशब्दस्वरूपं तस्मिन्नङ्गं स्यात्।

**एङ्ह्रस्वात्संबुद्धेः ६।१।६९**

एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते संबुद्धेश्चेत्। हे राम! हे रामौ! हे रामाः!

**अमि पूर्वः ६।१।१०७**

अकोऽम्यचि पूर्वरूपमेकादेशः स्यात्। रामम् (३) । रामौ।

**लशक्वतद्धिते १।३।८**

तद्धितवर्जप्रत्ययाद्या ल–श–कवर्गा इतः स्युः।

**तस्माच्छसो नः पुंसि ६।१।१०३**

पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि।

**अट्कुप्वाङ्नुम्व्यवायेऽपि ८।४।२**

अट् कवर्गः पवर्गः आङ नुम्–एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात् समानपदे (४)। इति प्राप्ते।

**पदान्तस्य ८।४।३७**

नस्य णो न। रामान्।

---

(१) स–समा–इति, तवर्ग–सकार–मकारा इत्यर्थः।
(२) पराभिमुखस्य स्वाभिमुखीकरणं सम्बोधनम्॥
(३) 'राम+अम्' इत्यवस्थायां पूर्वरूपः।
(४) अत्र समानपदेनाखण्डपदविवक्षणाम्, तेन 'रघुनाथः' 'रामनाथः' इत्यादौ न णत्वम्। रामान्–अत्र राम+अस् इत्यवस्थायां सवर्णदीर्घः, सस्य नः।

**टा–ङसि–ङसामिनात्स्याः ७।१।१२**

अदन्ताट्टादीनामिनादयः स्युः (१) । णत्वम् । रामेण ।

**सुपि च ७।३।१०२**

यञादौ सुप्यतोऽङ्गस्य दीर्घः । रामाभ्याम् ।

**अतो भिस ऐस् ७।१।९**

"अनेकाल् शित्सर्वस्य ।" रामैः (२) ।

**ङेर्यः ७।१।१३**

अतोऽङ्गात्परस्य ङेर्यादेशः स्यात् ।

**स्थानिवदादेशोऽनल्विधौ (३) १।१।५६**

आदेशः स्थानिवत्स्यान्नतु स्थान्यलाश्रयविधौ । इति स्थानिवत्त्वात्सुपि चेति दीर्घः। रामाय (४) । रामाभ्याम् ।

**बहुवचने झल्येत् (५) ७।३।१०३**

झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः । रामेभ्यः । सुपि किम् ? पचध्वम् ।

**वावसाने ८।४।५६**

अवसाने झलां चरो वा । रामात्, रामाद् । रामाभ्यां । रामेभ्यः । रामस्य ।

**ओसि च ७।३।१०४**

अतोऽङ्गस्यैकारः । रामयोः (६) ।

---

(१) 'टा' इत्यस्य 'इन' । 'ङसि' इत्यस्य 'आत्' 'ङस्' इत्यस्य 'स्य' इति व्यवस्था । रामेण–राम+टा 'इनः' गुणो णत्वं च ।

(२) 'भिस्' सर्वस्य स्थाने 'ऐस्' आदेशे वृद्धिविसर्गौ–रामैः ।

(३) न अल् विधिः=अनल्विधिः, तस्मिन्–अनल्विधौ । अल्विधिश्च अलाश्रितोविधिः, एकवर्णाश्रितो विधिरित्यर्थः ।

(४) 'राम+ङे य' स्थानिवद्भावेन यकारस्यापि सुप्त्वात् 'सुपि चेति' दीर्घः ।

(५) एकारविधानं सुपि च इति दीर्घस्यापवादः ।

(६) राम+ओस्, एत्वे– 'अय्' आदेशः ।

## ह्रस्वनद्यापो नुट् ७।१।५४

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः ।

## नामि ६।४।३

अजन्ताङ्गस्य दीर्घः । रामाणाम् । रामे(१) । रामयोः । सुपि एत्वे कृत ।

## आदेशप्रत्यययोः ८।३।५९

इणकुभ्यां परस्यापदान्तस्य-आदेशः प्रत्ययावयवश्च यः स स्तस्य मूर्धन्यादेशः । ईषद्विवृतस्य सस्य तादृश एव षः । रामेषु । एवं कृष्णमुकुन्दादयः ।

## सर्वादीनिसर्वनामानि (२) १।१।२७

सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः । सर्व । विश्व । उभ । उभयः । डतर । डतम । अन्य । अन्यतर । इतर । त्वत् । त्व । नेम । सम । सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् (३)। स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद् । तद् । यद् । एतद् । इदम् । अदस् । एक । द्वि । युष्मद् । अस्मद् । भवतु । किम् । एते पञ्चत्रिंशच्छब्दाः सर्वादयः ।

## जसः शी ७।१।१७

अदन्तात्सर्वनाम्नो जसः शी स्यात् । अनेकालत्वात्सर्वादेशः । सर्वे(४) ।

---

(१) राम+ङि, (इ), गुणः । रामशब्दस्य सप्तविभक्तिषु प्रयोगाः–

रामो राजमणिः सदा विजयते रामं रमेशं भजे ।
रामेणाऽभिहता निशाचरचमू रामाय तस्मै नमः ॥
रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहम् ।
रामे चित्तलयः सदा भवतु मे हे राम ! मां पालय ॥१॥

एवं कृष्ण–मुकुन्द, हर–ईश्वर इत्यादयोऽकारान्ताः शब्दा ज्ञेयाः ।

(२) सर्वादिगणपठितानि सर्वनामसंज्ञानि भवन्तीत्यर्थः । सर्वस्य नाम 'सर्वनाम' इत्यन्वर्थेयं संज्ञा ।

(३) इमानि त्रीणि गणसूत्राणि ।

(४) सर्वे– अनेकालत्वात् 'जस्' सर्वस्य स्थाने 'शी' आदेशे शकारस्य 'लशक्वतद्धिते' इत्यनेन इत्संज्ञानन्तरं लोपः ।

**सर्वनाम्नः स्मै ७।१।१४**

अतः सर्वनाम्नो ङे : स्मै । सर्वस्मै ।

**ङसिङ्योः स्मात्स्मिनौ ७।१।१५**

अतः सर्वनाम्न एतयोरेतौ स्तः । सर्वस्मात् ।

**आमिसर्वनाम्नः सुट् ७।१।५२**

अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यात् । एत्व-षत्वे । सर्वेषाम् (१) । सर्वस्मिन् । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः । उभशब्दो नित्यं द्विवचनान्तः । उभौ २ । उभाभ्याम् ३ । उभयोः २ । तस्येह पाठोऽकजर्थः (२) उभयशब्दस्य द्विवचनं नास्ति । डतर–डतमौ प्रत्ययौ । प्रत्ययग्रहणे (३) तदन्तग्रहणमिति तदन्ता ग्राह्याः । नेम (४) इत्यर्धे । समः सर्वपर्यायः । तुल्यपर्यायस्तु न । समानामिति ज्ञापकात् (५) ।

**पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् १।१।३४**

एषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणपाठात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे, पूर्वाः । स्वाभिधेयापेक्षावधिनियमो (६) व्यवस्था । व्यवस्थायां किम् ? दक्षिणा गाथकाः, कुशला इत्यर्थः । असंज्ञायां किम् ? उत्तराः कुरवः ।

---

(१) 'सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां तक्रं कौडिन्याय' इति बाधकनियमेन नुटं बाधित्वा सुडागमानन्तर–एत्व–षत्वे ।

(२) अकच्–प्रत्ययार्थः, इत्यर्थः ।

(३) डतर–डतम इव कतर–कतम, यतर–यतम इत्यादयोऽपि ग्राह्या इत्यर्थः ।

(४) 'अर्ध' वाचक नेमशब्दस्य सर्वनाम संज्ञेत्यर्थः ।

(५) यदि तुल्यपर्यायिवाचक 'सम' शब्दोऽपि सर्वनामः स्यात्तदा 'यथासंख्यमनुदेशः समानाम्' इत्यस्य स्थाने समेषाम् इति रूपं स्यादित्यर्थः ।

(६) स्वस्य (पूर्वादिशब्दस्य) अभिधेयः (दिग्देशकालरूपोऽर्थो वाच्यर्थः) तेन अपेक्ष्यत इति स्वाभिधेयापेक्षः (अवधिः) तस्य अवधेर्नियम इति स्वाभिधेयापेक्षावधिनियमस्तादृश नियम एव व्यवस्था । एवं च यत्र किं कस्मात् पूर्वं कस्मादपरमित्यवध्याकाङ्क्षाया नियमः स्यात् तत्रैव भवति सर्वनामसंज्ञेत्यर्थः । तेन 'दक्षिणा गाथका' इत्यत्र दक्षिणे-शब्दः– चतुर वाचक इति नावधेराकाङ्क्षा ।

**स्वमज्ञाति – धनाख्यायाम् (१) १।१।३५**

ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा । स्वे, स्वाः । आत्मीयाः आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः, ज्ञातयोऽर्था वा ।

**अन्तरं बहिर्योगोपसंव्यानयोः १।१।३६**

बाह्ये परिधानीये चार्थेऽन्तर–शब्दस्य प्राप्ता संज्ञा जसि वा । अन्तरे – अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे – अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ।

**पूर्वादिभ्यो नवभ्यो वा ७।१।१६**

एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन् । पूर्वे । एव परादीनामपि । शेषं सर्ववत् । (**संज्ञोपसर्जनोभूतास्तु न सर्वादयः**) । सर्वो नाम कश्चित्तस्मै सर्वाय देहि । अतिक्रान्तः सर्वमतिसर्वस्तस्मै अतिसर्वाय । (**(२)अन्तरमिति गणसूत्रेऽपुरीति वक्तव्यम्**) । अन्तरायां पुरि ।

**तृतीया समासे १।१।३०**

अत्र सर्वनामता न । मासपूर्वाय । तृतीयासमासार्थवाक्येऽपि न । मासेन पूर्वाय ।

**द्वन्द्वे च १।१।३१**

उक्ता संज्ञा न । वर्णाश्रमेतराणाम् ।

**विभाषा जसि १।१।३२**

वर्णाश्रमेतरे । वर्णाश्रमेतराः ।

**प्रथम(३)– चरम – तयाल्पार्ध – कतिपय – नेमाश्च १।१।३३**

एते जस्युक्तसंज्ञा वा स्युः । प्रथमे, प्रथमाः । तयप्प्रत्ययः । द्वितये, द्वितयाः ।

---

(१) स्वशब्दस्य आत्मा, आत्मीयः, धनम्, ज्ञातिश्च चत्वारोऽर्थाः प्रसिद्धाः । तत्रात्मात्मीयवाचिन एव सर्वनामसंज्ञा, न तु ज्ञातिधनवाचिन इत्यर्थः ।

(२) स्त्रीत्वविशिष्टनगरार्थवाचकस्य विशेष्यत्वे – अन्तरशब्दस्य विशेषणीभूतस्य सर्वनामसंज्ञा न भवति, तद्भिन्नत्वे तु भवति । तेन 'अन्तरायां नगर्याम्' इत्यत्र न सर्वनामसंज्ञा, अन्तरस्मिन् नगरे इत्यत्र तु सर्वनामसंज्ञेत्यर्थः ।

(३) तेन तदन्ताः (तयप्प्रत्ययान्ताः) द्वितय – द्वय – त्रितय – त्रय – चतुष्टय – पञ्चतय इत्यादयोऽपि ग्राह्या इत्यर्थः ।

शेषं रामवत् । नेमे, नेमाः । शेषं सर्ववत् । (तीयस्य ङित्सु वा(१)) । द्वितीयस्मै । द्वितीयायेत्यादि । एवं तृतीयः । निर्जरः(२) ।

## जराया जरसन्यतरस्याम् ७।२।१०१

जराया जरस् वाऽजादौ विभक्तौ । 'पदाङ्गाधिकारे(३) तस्य तदन्तस्य च' । निर्दिश्यमानस्यादेशा भवन्ति' (४) । एकदेशविकृतस्यानन्यत्वाज्जरशब्दस्य जरस् । निर्जरसौ । निर्जरसः । उपजीव्यविरोधान्न(५) जरस् । निर्जरैः । पक्षे हलादौ च रामवत् ।

## पद्दन्नोमास् – हृन्निशसन् – यूषन्–दोषन् – यकञ्छकन्नुदन्नासञ्छस्-प्रभृतिषु ६।१।६३

पाद दन्त नासिका मास हृदय निशा असृज् यूष् दोष् यकृत् शकृत् उदक् आस्य एषां पदादय आदेशाः स्युः शसादौ वा। यत्तु आसन–शब्दस्यासन्नादेश इति काशिकायामुक्तं तत्प्रामादिकमेव(६) । पादः । पादौ । पादाः । पादम् । पादौ । पदः, पादान् । पदा, पादेन । इत्यादि । विश्वपाः(७) ।

## दीर्घाज्जसि च ६।१।१०५

दीर्घाज्जसि इचि च न पूर्वसवर्णदीर्घः । वृद्धिः । विश्वपौ । विश्वपाः । हे विश्वपाः ! हे विश्वपौ ! हे विश्वपाः !

## सुडनपुंसकस्य १।१।४३

स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानिस्युरक्लीबस्य ।

---

(१) ङिद्वचनेषु (ङे – ङसि – ङस् – ङि – इत्येतेषु) ।

(२) निर्गतो जराया इति निर्जरः = देवः । 'अमरा निर्जरा देवाः' इत्यमरः ।

(३) अत्रा ङ्गाधिकारः । तेन निर्जरस्यापि 'जरस्' आदेशः ।

(४) सर्वस्य 'निर्जर' शब्दस्यादेशप्राप्तौ यावन्मात्रस्य स्थानित्वेन निदेशस्तावन्मात्रस्यादेश इत्यर्थः ।

(५) उपजीव्यं = निमित्तकारणं, तद्विरोधादित्यर्थः ।

(६) प्रामादिकमेव – भ्रान्तिमूलकमेवेत्यर्थः ।

(७) विश्वं पाति = रक्षतीति, विश्वपाः (परमात्मा) ।

**स्वादिष्वसर्वनामस्थाने १।४।१७**

कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदं स्यात् ।

**यचि भम् १।४।१८**

यकारादिष्वजादिषु च कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात् ।

**आकडारादेका संज्ञा १।४।१**

इत ऊर्ध्वं 'कडाराः कर्मधारये' इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया, या पराऽनवकाशा च । तेन (१) शसादावचि भ-संज्ञैव, न पदसंज्ञा ।

**आतो धातोः ६।४।१४०**

आकारान्तो (२) यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः । अलोऽन्त्यस्य । विश्वपः। विश्वपा । विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । धातोः किम् ? हाहान् (३) । 'आत' (४) इति योगविभागादधातोरप्याकारलोपः क्वचित् । (क्त्वः) श्नः । हरिः हरी (५) ।

**जसि च ७।४।१०६**

ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि । हरयः।

**ह्रस्वस्य गुणः ७।३।१०८**

सम्बुद्धौ । हे हरे !। हरिम् । हरीन्।

---

(१) तेन (सु–औ–जस्–अम्–औट् इति) सर्वनामस्थानभिन्नायाम् अजादौ विभक्तौ 'भ' संज्ञा, हलादौ च 'पद संज्ञेति' व्यवस्था ।

(२) 'क्विबन्ता–विडन्ता–विजन्ताः शब्दा धातुत्वं न जहति' इति क्विबन्तस्यापि 'विश्वपा' शब्दस्य धातुत्वम् ।

(३) 'हाहा' शब्दो गन्धर्ववाचकः, न तु धातुरूपः 'हाहा-हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम्' इत्यमरः ।

(४) आतो धातोः– इत्यस्य 'आतः' इति योगो विभज्यते, विभागेन आकारान्तस्य भस्याङ्गस्य लोपः स्यादित्यर्थो भवति । तेन क्त्वा–श्ना–शब्दस्य 'क्त्वः, श्नः' इति शसिरूपं सिद्ध्यति ।

(५) 'हरि+औ' इत्यवस्थायां 'प्रथमयोः पूर्वसवर्णः' इति सूत्रेण पूर्वसवर्णदीर्घः ।

**शेषो घ्यसखि १।४।१७**

शेष इति स्पष्टार्थम् । अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञं स्यात् ।

**आङो नाऽस्त्रियाम् ७।३।१२०**

घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टा-संज्ञा प्राचाम् (१) । हरिणा । हरिभ्याम् ३। हरिभिः ।

**घेर्ङिति ७।३।१११**

घिसंज्ञकस्य ङिति सुपि गुणः । हरये । हरिभ्यः २। गुणे कृते ।

**ङसिङसोश्च ६।१।११०**

एङो ङसिङसोरति परे पूर्वरूपमेकादेशः । हरेः २। हर्योः २। हरीणाम् ।

**अच्च घेः ७।३।११९।**

इदुद्भ्यां परस्य ङे रौत् घेरत् । हरौ (२) । हरिषु । एवं कव्यादयः ।

**अनङ् सौ ७।१।९३**

सख्युरङ्गस्यानङादेशोऽसम्बुद्धौ सौ ।

**अलोऽन्त्यात्पूर्व उपधा १।१।६५**

अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात् ।

**सर्वनामस्थाने चासम्बुद्धौ ६।४।८**

नान्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने ।

**अपृक्त एकाल्प्रत्ययः १।२।४१**

**हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ६।१।६८**

हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं (३) सुतिसीत्येतदपृक्तं हल् लुप्यते ।

(१) 'टा' इति तृतीयैकवचनस्य 'आङ' इति संज्ञा-इत्यर्थः ।

(२) 'हरि+ङि' अच्च घेः- इत्यादिना 'हरि' इत्यस्य इकारस्थाने 'अत्' आदेशे 'ङि' इत्यस्य 'औत्' आदेशे, वृद्धिः 'हरौ' इति ।

(३) सु' सम्बन्धि, 'ति' (तिप्) सम्बन्धि, सि (सिप्) सम्बन्धि (न तु सिच्सम्बन्धि)।

**प्रत्ययलोपे प्रत्ययलक्षणम् १।१।६२**

प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात् ।

**नलोपःप्रातिपदिकान्तस्य ८।२।७**

प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः । सखा (१) ।

**सख्युरसम्बुद्धौ ७।१।९२**

सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् ।

**अचोऽञ्णिति ७।२।११५**

अजन्ताङ्गस्य वृद्धिर्ञिति णिति च । सखायौ । सखायः । हे सखे ! सखायम् । सखायौ । सखीन् । सख्या । सखिभ्याम् । सखिभिः । सख्ये ।

**ख्यत्यात्परस्य ६।१।११२**

खि–तिशब्दाभ्यां खी–ति शब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसि–ङसोरत उत् । सख्युः २ ।

**औत् ७।३।११८**

इदुद्भ्यां परस्य ङेरौत् । सख्यौ । शेषं हरिवत् ।

**पतिः समास एव १।४।८**

घिसंज्ञः । पत्या । पत्युः २ (२) । पत्यौ । शेषं हरिवत् । समासे तु (३) भूपतये । कतिशब्दो नित्यं बहुवचनान्तः ।

**बहु–गण–वतु–डति संख्या(४) १।१।२३**

**डति च १।१।२५**

डत्यन्ता संख्या षड्संज्ञा स्यात् ।

---

(१) सखि+सु, अनङ–सखन्+सु, सलोपः, नान्तस्येति दीर्घे, नस्य लोपः 'सखा' इति ।

(२) 'ख्यत्यात्परस्य' इत्यनेन 'उत्वम्' ।

(३) घिसंज्ञककार्यसम्भवादित्यर्थः ।

(४) 'किमः संख्यापरिमाणे डति च' इति 'डति' प्रत्यये टिलोपः, का संख्या येषां ते कति, नित्यं बहुवचनान्तोऽयम् ।

## षट्भ्यो लुक् ७।१।२२

जश्शसोः ।

## प्रत्ययस्य लुक्–श्लु–लुपः १।१।६१

लुक्–श्लु–लुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् । जसि चेति गुणे प्राप्ते ।

## न लुमताऽङ्गस्य १।१।६३

लुक् श्लु लुप् एते लुमन्तः । लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात्। कति २ । कतिभिः । कतिभ्यः । कतिभ्यः । कतीनाम् । कतिषु । अस्मद्–युष्मत्–षट्संज्ञकास्त्रिषु सरूपाः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः (१) । त्रीन् । त्रिभिः । त्रिभ्यः २ ।

## त्रेस्त्रयः(२) ७।१।५३

आमि । त्रयाणाम् । त्रिषु । गौणत्वेऽपि (३) प्रियत्रयाणाम् । द्विशब्दो नित्यं द्विवचनान्तः ।

## त्यदादीनामः ७।२।१०२

एषामकारो विभक्तौ । द्विपर्यन्तानामेवेष्टिः । (४)द्वौ २ । द्वाभ्याम् ३ । द्वयोः २। द्विपर्यन्तानां किम्? भवान् । भवन्तौ । पाति लोकमिति–पपीः=सूर्यः । पप्यौ । पप्यः । हे पपीः । पपीम् । पपीन् । पप्या । पपीभ्याम् ३ । पपीभिः । पप्ये । पपीभ्यः २। पप्यः २ । पप्योः २। पप्याम् । पप्यि ङौ तु सवर्णदीर्घः पपी । पपीषु । एवं वातप्रम्यादयः। बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी (५)।

## यू(६) स्त्र्याख्यौ नदी १।४।३

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । (**प्रथम लिङ्गग्रहणं च**) । पूर्वं

---

(१) त्रि+जस्–अस् इति स्थिते 'जसि च' इति गुणः, अयादेशः।

(२) त्रिशब्दस्य त्रयादेशः स्यादामीत्यर्थः ।

(३) अन्यपदार्थप्रधाने बहुव्रीहिसमासे समागतानि समस्तानि गौणानि–उपसर्जनानि उच्यन्ते । प्रियास्त्रयो यस्य स 'प्रियत्रिः' तेषां प्रियत्रयाणाम् ।

(४) 'त्यद्' इत्यारभ्य 'द्वि' शब्दपर्यन्तमेव अकारो भवति इति इष्यते–इष्टिः ।

(५) कल्याण्यः स्त्रियः ।

(६) ईश्च ऊश्च 'यू' ईदूदन्तौ इत्यर्थः, स्त्र्याख्यौ=नित्य स्त्रीलिङ्गौ ।

स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः (१)।

**अम्बार्थनद्योर्ह्रस्वः ७।३।१०७**

अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात्सम्बुद्धौ। हे बहुश्रेयसि !।

**आण्नद्याः ७।३।११२**

नद्यन्तात्परेषां ङिताम्माडागमः (२) ।

**आटश्च ६।१।९०**

आटोऽचि परे वृद्धिरेकादेशः स्यात्। बहुश्रेयस्यै। बहुश्रेयस्याः। बहुश्रेयसीनाम्।

**ङेराम्नद्याम्नीभ्यः ७।३।११६**

नद्यन्तादाबन्तान्नीशब्दाच्च परस्य ङेरामादेशः स्यात्। इह (३) परत्वादाटा नुट् बाध्यते। बहुश्रेयस्याम्। शेषं पपीवत्। अङ्यन्तत्वान्न सुलोपः। अतिलक्ष्मीः (४)। शेषं बहुश्रेयसीवत्। प्रधीः (५)।

**अचि श्नु-धातु-भ्रुवां य्वोरियङुवङौ ६।४।७७**

श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्येतस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे। इति प्राप्ते।

**एरनेकाचोऽसंयोगपूर्वस्य ६।४।८२**

धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे। प्रध्यौ। प्रध्यः। प्रध्यम्। प्रध्यः। प्रध्यि। शेषं पपीवत्।

---

(१) यः शब्दः प्रथमं स्त्रीलिङ्गः स्यात् पश्चादुपसर्जनदशायां लिङ्गविपर्ययेऽपि तस्य नदीसंज्ञा भवतीति भावः।

(२) ङिताम्=ङिद्वचनानाम् (ङे, ङसि, ङस्, ङि) इत्येतेषाम्।

(३) नुटः परत्वादाट्। न च कृतेऽपि- आडागमे नुट् कुतो नेति वाच्यम्-'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्यायात्।

(४) 'लक्षेर्मुट् च' इत्युणादिसूत्रेण 'ई' प्रत्ययः मुडागमश्च, अत एव ङीबन्तत्वाभावाद् हल्ङ्याबिति सुलोपो न।

(५) प्रध्यायतीति प्रधीः, इति विग्रहः। प्रकृष्टा धीर्यस्येति विग्रहे तु 'धी' शब्दस्य नित्यस्त्रीत्वात् बहुश्रेयसीवत् नदीकार्याणि भवन्त्येव।

एवं (१) ग्रामणीः । ङौ तु- ग्रामण्याम् (२) । अनेकाचः किम् ? नीः, नियौ, नियः । नियम् (३)। असंयोगपूर्वस्य किम् ? सुश्रियौ (४) । यवक्रियौ ।

**गतिश्च १।४।६०**

प्रादयः क्रियायोगे गतिसंज्ञाः स्युः। (गतिकारकेतर पूर्वपदस्य यण्नेष्यते (५)) । शुद्धधियौ । शुद्धधियः ।

**न भू- सुधियोः ६।४।८५**

एतयोरचि सुपि यण्न। सुधीः । सुधियौ । सुधियः । इत्यादि । सुखमिच्छतीति सुखीः (६) । सुतीः । (७) सुत्युः । २। सुख्युः । २। शेषं प्रधीवत् । शम्भुर्हरिवत् । एवं भान्वादयः ।

**तृज्वत्क्रोष्टुः ७।१।९५**

असम्बुद्धौ सर्वनामस्थाने । 'क्रोष्टु' इत्यस्य स्थाने 'क्रोष्टृ' इति प्रयोक्तव्य इत्यर्थः ।

**ऋतो ङि- सर्वनामस्थानयोः (८) ७।३।११०**

गुणः । इति प्राप्ते ।

**ऋदुशनस् (९) पुरुदंसोऽनेहसां च ७।१।९४**

ऋदन्तानामुशनसादीनां चानङ स्यादसम्बुद्धौ सौ ।

---

(१) ग्रामं नयतीति ग्रामणीः- ग्राममुख्यः ।

(२) 'ङेराम्नद्याम्नीभ्यः' इति सूत्रेण-आम् ।

(३) 'नि + अम्' इत्यवस्थायां 'इको यणचि' इति प्राप्तं यणं बाधित्वा 'अमिपूर्वः' इति पूर्वरूपं प्राप्नोति, ततः परत्वात् 'अचिश्नु....' इति 'इयङ' ।

(४) सुश्रियौ-शोभनं श्रयतीति विग्रहः । शोभना श्रीयंस्येति विग्रहे तु नदीत्वं स्यादेव ।

(५) गतिकारकपूर्वपदस्यैव यण् भवति, तेन शुद्धा धीर्यस्य स शुद्धधीः । 'शुद्धधियौ' इत्यादौ शुद्धशब्दस्य गतिकारकत्वान्न यण् किन्तु-इयङ् ।

(६) क्यजन्तात् क्विप्, क्यचि च इति ईत्वम् ।

(७) सुती + ङसि अस्, सुखी + ङसि अस्, यणि कृते 'ख्यत्यात्परस्य' इति- उत्वम् ।

(८) ऋदन्ताङ्गस्य गुणो ङौ सर्वनामस्थाने चेत्यर्थः ।

(९) उशना = शुक्राचार्यः, पुरुदंसः = मार्जारः, अनेहाः = समयः । नमश्चिरतृजव- द्भावेभ्यो.... पूर्वविप्रतिषेधेन— 'विप्रतिषेधे परं कार्यं स्यात्' इत्यत्र- 'अपरम्' इति च्छेदादिति भावः ।

**अप्-तृन्-तृच्-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तृणाम् ६।४।११**

अबादीनामुपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । क्रोष्टून् ।

**विभाषा तृतीयादिष्वचि ७।१।९७**

अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा, क्रोष्टुना । क्रोष्ट्रे, क्रोष्टवे ।

**ऋत उत् ६।१।१११**

ऋतो ङसिङसोरति परे पूर्वपरयोरुदेकादेशः स्यात् । रपरः ।

**रात्सस्य ८।२।२४**

रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य । विसर्गः । क्रोष्टुः २। क्रोष्टोः२। क्रोष्ट्रोः । (नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन) । क्रोष्टूनाम् । क्रोष्टरि । पक्षे हलादौ च शम्भुवत् । हूहूः । हूह्वौ, इत्यादि । अतिचमू (१) शब्दे तु नदीकार्यं विशेषः । हे अतिचमु ! । अतिचम्वै । अतिचम्वाः २। अतिचमूनाम् । अतिचम्वाम् । खलपूः (२)।

**ओः सुपि ६।४।८३**

धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादचि सुपि । खलप्वौ । खलप्वः । एवं सुल्वादयः । स्वयम्भूः । स्वयम्भुवौ । स्वयम्भुवः । एवं स्वभूः । वर्षाभूः ।

**वर्षाभ्वश्च ६।४।८४**

अस्य यण् स्यादचि सुपि । वर्षाभ्वावित्यादि । दृन्भूः । (दृन्करपुनः पूर्वस्य भुवो यण् वक्तव्यः) । दृन्भ्वौ । दृन्भ्वः । एवं करभूः । पुन-भूः । दृभूकाराभूशब्दो तु स्वयम्भूवत् । धाता । धातारौ । धातारः । हे धातः । (ऋवर्णान्नस्य णत्वं वाच्यम्) ।

---

(१) 'प्रथमलिङ्ग ग्रहणं च' इत्यनेन ।

(२) खलं पुनातीति विग्रहः । द्वितीयायामपि यणेव- खलप्वम्' खलप्वौ । अप्तृन्निति सूत्रे नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्- सिद्धे सत्यामारभ्यमाणो विधिर्नियमाय भवति, नियमश्चैतादृशः-उणादिनिष्पन्नानां तृन्तृच्प्रत्ययान्तानां संज्ञाशब्दानां दीर्घो भवति चेत्तर्हि नप्त्रादीनामेवेति ।

धातृणाम् । एवं नप्त्रादयः । अप्तृन्निति सूत्रे नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् । तेनेह न । पिता । पितरौ । पितरः । शेषं धातृवत् । एवं जामात्रादयः ना(१) । नरौ । नरः ।

## नृ च ६।४।६

अस्य नामि वा दीर्घः । नृणाम् । नृणाम् ।

## गोतो णित् ७।१।९०

गोशब्दात्परं सर्वनामस्थानं णिद्वत् । गौः । गावौ । गावः ।

## औतोऽम्शसोः ६।१।९३

ओकारादम्शसोरचि आकार एकादेशः । गाम् । गावौ । गाः । गवा । गवे । गोः (२)।

## रायो हलि ७।२।८५

रैशब्दस्याऽऽकारादेशो हलि विभक्तौ । राः । रायौ । रायः । राभ्यामित्यादि । ग्लौः(३) । ग्लावौ । ग्लावः । ग्लौभ्यामित्यादि ।

## ॥ इत्यजन्तपुंलिङ्गाः ॥

### अभ्यासः

(१) रामशब्दस्य प्रथमाया बहुवचने, तृतीयाया बहुवचने, चतुर्थ्या एकवचने, षष्ठ्या बहुवचने, सप्तम्या द्विवचने कीदृशानि रूपाणि भवन्ति? लिखत ।

(२) रामः, रामान्, रामेभ्यः, रामाणाम्, रामेषु एते प्रयोगाः कथं सिध्यन्ति ?

(३) सर्वशब्दस्य प्रथमाया बहुवचने, चतुर्थ्या एकवचने, षष्ठ्या बहुवचने, सप्तम्या एकवचने जायमानानि रूपाणि लिखत ।

(४) पूर्वे, स्वे, अन्तरे, पूर्वस्मिन्, वर्णाश्रमेतराणाम् द्वितीयस्मै—एतेषां रूपाणां सिद्धि-प्रकारं प्रदर्शयत ।

---

(१) नृ + सु + अनङ इति स्थिते सुलोपः दीर्घः — ना = पुरुषः ।

(२) गोशब्द उभयलिङ्गः, उच्चारणं समानमेव । सप्तम्याम् — गवि, गवोः, गोषु ।

(३) ग्लौर्मृगाङ्कः कलानिधिरित्यमरात् ग्लौश्चन्द्रः ।

(५) **निम्न प्रयोगाणां साधनरीतिं प्रदर्शयत**

निर्जरः, पदः, विश्वपः, हरये, हरौ, सखा, पत्युः, कति, त्रयाणाम्, द्वौ, पपीः।

(६) **विशेषसूत्रप्रदर्शनपूर्वकं निम्नाङ्कितप्रयोगाः साधनीयाः**

हे बहुश्रेयसि !, प्रध्यौ, ग्रामण्याम्, शुद्धधियौ, सुत्युः, क्रोष्टा, अतिचम्वै, खलप्वः, दृन्भ्वौ, धाता, नृणाम्, गाः, राभ्याम्।

(७) प्रातिपदिक- अवसान—संबुद्धि—अङ्ग—सर्वनाम—सर्वनामस्थान—पद—भ—घिसंज्ञा-विधायकसूत्राणि लिखत।

(८) **निम्नाङ्कितसूत्राणां कार्याणि लिखत**

सुपः, अमि पूर्वः, पदान्तस्य, वावसाने, नामि, पूर्वादिभ्यो नवभ्यो वा, जराया जरसन्यतरस्याम्, दीर्घाज्जसि च, आतो धातोः, अच्चः, घेः, अचोऽञ्णिति, ङति च, आटश्च, नभूसुधियोः, रायो हलि।

(९) स्थानिवदादेशोऽनल्विधौ, आमि सर्वनाम्नः सुट्, पूर्वादिभ्यो नवभ्यो वा, आकडारादेका संज्ञा, अनङ् सौ, षड्भ्यो लुक्, यूस्त्र्याख्यौ नदी, अचिश्नुधातुभ्रुवां य्वोरियङुवङौ, ऋत उत्, ओः सुपि, औतोऽम्शसोः— एतेषां सूत्राणां वृत्तयो लेखनीयाः।

## साधनरीतिप्रदर्शनम्

**रामः**— रमन्ते योगिनोऽस्मिन्निति विग्रहे क्रीडार्थकाद् 'रम्' धातोः 'हलश्चेति' घञ् प्रत्यये, अनुबन्धलोपे, 'अत उपधायाः' इति वृद्धिः, 'राम' इत्यवस्थायां प्रातिपदिकसंज्ञायां, स्वादिप्रत्यये प्राप्ते 'द्व्येकयोर्द्विवचनैकवचने' इत्यनेन—एकत्वसंख्याविशिष्टार्थे—एकवचनविधानात्, प्रथमाया एकवचने 'सौ' विभक्तौ—उकारलोपे, राम स्, सस्य 'ससजुषो रुः' इति रुत्वे तस्य 'खरवसानयोर्विसर्जनीयः, इति विसर्गे 'रामः' इति रूपम्।

**सर्वे**— सर्वनामसंज्ञकात् सर्वशब्दात् प्रथमाया बहुवचने शस्यनुबन्धलोपे प्राप्तं गुण—वृद्धिदीर्घादिकं प्रबाध्य 'जसः शी' इत्यनेन 'अनेकालत्वात्' जस्—अस् सर्वस्य स्थाने 'शी' आदेशे शकारस्य 'लशक्वतद्धिते' इत्यनेन इत्संज्ञानन्तरं 'तस्यलोपः' इति लोपे, गुणे 'सर्वे' इति रूपं सिद्धम्।

**निर्जरः**— निर्गतो जराया इति व्युत्पत्त्यर्थकात् प्रातिपदिकसंज्ञकात् 'निर्जर' शब्दात् सु विभक्तौ—एकदेशविकृतस्यानन्यत्वाज्जरशब्दस्य 'जराया जरसन्यतरस्याम्' इत्यनेन 'जरस्' आदेशे रुत्वे विसर्गे च 'निर्जरः' इति।

सखा:– प्रातिपदिकाङ्गसंज्ञकात् सखिशब्दात् 'अनङ् सौ' इत्यनेन 'सखि' शब्दस्य इकारस्थाने 'अनङादेशे' 'अलोऽन्त्यादिति' उपधासंज्ञायाम्, 'सर्वनामस्थाने. . . .' इति दीर्घे, 'हल्ङ्याभ्य. . . .' इति सस्य लोपे 'न लोपः. . . .' इत्यनेन न लोपे 'सखा' इति सिद्धम्।

क्रोष्टा:– प्रातिपदिकसंज्ञक, सर्वनामस्थानसंज्ञकात् 'क्रोष्टु' शब्दात् सौ विभक्तौ 'तृज्वत्क्रोष्टुः' इत्यनेन क्रोष्टुशब्दस्य स्थाने 'क्रोष्टृ' आदेशे 'ऋतोङि. . . .' इत्यनेन प्राप्तं गुणं प्रबाध्य, 'ऋदुशनस्पुरुदंस. . .' इत्यनेन 'क्रोष्टृ' इति ऋकारस्य स्थाने 'अनङ्' आदेशे 'क्रोष्टन् स' इति स्थिते सर्वनामस्थानसंज्ञायाम् अप्तृन्निति दीर्घे, सकारनकारलोपे 'क्रोष्टा' इति।

पिता:– प्रातिपदिकसंज्ञकात् 'पितृ' शब्दात् सौ–गुणं प्रबाध्य 'ऋदुशनस. . . .' इत्यनेन 'अनङ्' आदेशे 'पितृन्स्' इत्यवस्थायां– उणादिनिष्पन्नानां तृन्तृजन्तानां दीर्घो भवति चेत्तर्हि नप्त्रादीनामेवेति नियमात् 'अप्तृन्निति' दीर्घनिषेधे 'सर्वनामस्थाने. . .' इति दीर्घे सकारनकारलोपे 'पिता' इति।

# अथाजन्तस्त्रीलिङ्गाः

रमा (१)

**औङ आपः ७।१।१८**

आबन्तादौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे(२) । रमाः(३) ।

**सम्बुद्धौ च ७।३।१०६**

आप एकारः । हे रमे ! हे रमे ! । हे रमाः ! । रमाम् । रमाः ।

**आङि चापः ७।३।१०५**

आङि ओसि चाप एकारः । रमया(४) । रमाभ्याम् । रमाभिः ।

**याडापः ७।३।११३**

आपो ङितो याट् । वृद्धिः । रमायै । रमाभ्यः । रमायाः । रमयोः । रमाणाम् (५) । रमायाम्(६) । रमासु । एवं दुर्गादयः ।

**सर्वनाम्नः स्याड्ढ्रस्वश्च ७।३।११४**

आबन्तात्सर्वनाम्नो ङितः स्याडापश्च ह्रस्वः । सर्वस्यै (७) । सर्वस्याः २ । सर्वासाम् । सर्वस्याम् । शेषं रमावत् । एवं विश्वादयोऽप्याबन्ताः ।

---

(१) 'रमते' इति विग्रहे रमु क्रीडायामित्यस्मात्पचाद्यचि टाप् । लिङ्गविशिष्टपरिभाषया स्वादयः । हल्ङ्यादिलोपः ।

(२) रमा + औ, औङः शीभावे शकारस्येत्संज्ञायां लोपे च गुणः ।

(३) रमा + जस् अस् इत्यत्र यद्यपि पूर्वसवर्णदीर्घः प्राप्तः, पर 'दीर्घाज्जसि चेति' निषेधात् न भवति, ततश्च 'अकः सवर्णे दीर्घः' इति सूत्रेण दीर्घो भवति । शसि तु 'प्रथमयो' रिति पूर्वसवर्णदीर्घ एव ।

(४) रमा+ (टा) आ, आप एत्वेऽयादेशः ।

(५) रमा+आम्, आबन्तत्वात् 'ह्रस्वनद्यापो नुट्' इति आमो नुडागमः, नस्य णत्वं रमाणाम् ।

(६) रमा + ङि इति स्थिते 'ङेराम्नद्याम्नीभ्यः' इति ङेरामि, स्थानिवद् भावेन आमो ङित्वमाश्रित्य 'याडापः' इत्यनेन याट् ।

(७) सर्वशब्दाद् स्त्रीत्वे टाप्, सर्वा + ( ङे ) ए, याटोऽपवादः स्याट्, पूर्वस्य–आप आकारस्य ह्रस्वः, 'वृद्धिरेचि' इति वृद्धिः, नतु 'आटश्चेति' अत्राट एकदेशत्वनाऽनर्थकत्वात् ।

## विभाषा दिक्समासे बहुव्रीहौ १।१।२८

सर्वनामता वा स्यात् । उत्तरपूर्वस्यै (१) । उत्तरपूर्वायै । इत्यादि । अन्तरस्यै शालायै । अपुरीत्युक्तेर्नेह– अन्तरायै नगर्यै । तीयस्य ङित्सूपसंख्यानात् । द्वितीयस्यै । द्वितीयायै । एवं तृतीया । अम्बार्थनद्योर्ह्रस्वः । हे अम्ब । हे अक्क । हे अल्ल । असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न । हे अम्बाडे ! । हे अम्बाले ! हे अम्बिके ! । जरा । जरसौ, जरे ! । इत्यादि । पक्षे हलादौ च रमावत् । गोपा विश्वपावत् । मतीः (२) । मत्याः ।

## ङिति ह्रस्वश्च १।४।६

इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इ–उवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति । मत्यै (३) । मतये । मत्याः । मतेः । परत्वात् 'औत्' इति प्राप्ते ।

## इदुद्भ्याम् ७।३।११७

नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् । मत्याम् । मतौ (४) । शेषं हरिवत् । एवं बुद्ध्यादयः ।

## त्रिचतुरोः स्त्रियां तिसृ चतसृ ७।२।९९

स्त्रीलिङ्गयोरेतयोरेतौ स्तो विभक्तौ ।

## अचि र ऋतः ७।२।१००

तिसृचतस्रोर्ऋतो रादेशोऽचि । गुणदीर्घोत्त्वानामपवादः । तिस्रः २ । तिसृभिः । तिसृभ्यः २ । आमि नुट् ।

---

(१) उत्तरस्याः पूर्वस्याश्च दिशोऽन्तरालम्– इत्यर्थे, उत्तरपूर्वा + ङे (ए) स्याडागमे, आपः– ह्रस्वे, वृद्धौ । सर्वनामसंज्ञाभावे– याडागमे 'आटश्च' ति वृद्धौ उत्तरपूर्वायै ।

(२) मति (शस्) अस् पूर्वसवर्णदीर्घे सस्य रुत्वविसर्गौ, स्त्रीत्वान्नत्वं न ।

(३) मति + ङे, ए इत्यत्र नद्यन्तत्वादाट् वृद्धौ, यण्, मत्यै । नदीत्वाभावपक्षे घिसंज्ञाकार्यम्, गुणः, अय्, मतये इति ।

(४) मति + ङि, नदीत्वाभावपक्षे घिसंज्ञायां 'अच्च घेः' इति इकारस्याकारः, ङेरौत्वे च 'वृद्धिरेचि' इति वृद्धौ सत्याम् 'मतौ' इति सिद्धम् ।

## न तिसृ–चतसृ ६।४।४

एतयोर्नामि दीर्घो न। तिसृणाम्। तिसृषु। द्वे २ (१)। द्वाभ्याम् ३। द्वयोः २। गौरी। गौर्यौ। गौर्यः। हे गौरि। गौर्यावित्यादि। एवं नद्यादयः। लक्ष्मीः (२)। शेषं गौरीवत्। एवं तरीतन्त्र्यादयः (३)। स्त्री। हे स्त्री!।

## स्त्रियाः ६।४।७९

अस्येयङजादौ प्रत्यये। स्त्रियौ। स्त्रियः।

## वाऽम्–शसोः ६।४।८०

अमि शसि च स्त्रियाः इयङ वा। स्त्रियम्, स्त्रीम्। स्त्रियः, स्त्रीः। स्त्रिया। स्त्रियै। स्त्रीयाः २। स्त्रियोः २। परत्वान्नुट्। स्त्रीणाम् (४)। स्त्रीयाम्। स्त्रीषु। श्रीः। श्रियौ। श्रियः।

## नेयङुवङ्स्थानावस्त्री १।४।४

इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो न तु स्त्री। हे श्रीः!। श्रियै (५), श्रिये। श्रियाः २। श्रियः २।

## वाऽऽमि १।४।५

इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो न तु स्त्री। श्रीणाम्(६)। श्रियाम् २। श्रियि। धेनुर्मतिवत्।

---

(१) 'द्वि' शब्दो नित्यं द्विवचनान्तः। स्त्रीत्वे विभक्तौ 'त्यदादीनामः' इत्यत्वे टाप्, (द्वि) द्वा+औ, इति स्थितौ 'औङ आपः' इत्यौकारस्य शीत्वे गुणः द्वे।

(२) 'लक्षेर्मुट् च' इत्युणादिसूत्रेण 'ई' प्रत्ययो मुडागमश्च, अङ्यन्तत्वान्न सुलोपः।

(३) **अवी–तन्त्री–तरी–लक्ष्मी–धी–ह्री–श्रीणामुणादिषु।**
**सप्त– स्त्रीलिङ्गशब्दानां न सुलोपः कदाचन॥**

(४) स्त्री+आम् इत्यत्र 'स्त्रियाः' इति प्राप्तम् इयङादेशं परत्वाद् 'ह्रस्वनद्यापो नुट्' इति नुट् बाधते, स्त्रीणाम्।

(५) 'श्रियै' इत्यत्र 'ङिति ह्रस्वश्च' इति वा नदीसंज्ञा आट्–वृद्धिः इयङ। पक्षे इयङमात्रम्।

(६) नदीत्वपक्षे नुट्।

**स्त्रियां च ७।१।९६**

स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते ।

**ऋन्नेभ्यो ङीप् ४।१।५**

ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् । क्रोष्ट्री । गौरावत् । वधूः । शेषं नदीवत् । भ्रूः श्रीवत् । स्वयम्भूः पुंवत् ।

**नषट्स्वस्रादिभ्यः (१) ४।१।१०**

एभ्यो ङीप्टापौ न स्तः ।

**'स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ।**
**याता (२) मातेति सप्तैते स्वस्रादय उदाहृताः ॥**

स्वसा । स्वसारौ । माता पितृवत् । शसि मातॄः । द्यौर्गोवत् । राः पुंवत् । नौर्ग्लौवत् ।

## ॥ इत्यजन्ताः स्त्रीलिङ्गाः ॥

### अभ्यासः

(१) रमाः, हे रमे !, रमया, रमायै, सर्वस्यै, उत्तरपूर्वायै– एतेषां सिद्धिप्रकारं प्रदर्शयत ।

(२) हे अम्ब !, हे अक्क !, हे अल्ल ! इत्यत्रैव हे अम्बाडे !, हे अम्बाले, हे अम्बिके ! इत्यत्रापि 'अम्बार्थनद्योर्ह्रस्वः' इति सूत्रेण कथं न ह्रस्वः ?

(३) मतीः, मत्याः, मती, तिस्रः, हे गौरि !, स्त्रियम्, श्रीणाम्——एतानि रूपाणि कथं सिद्ध्यन्ति ?

(४) धेनुशब्दस्य द्वितीयाया बहुवचने, स्त्रीवाचिक्रोष्टुशब्दस्य प्रथमाया एकवचने, वधूशब्दस्य द्वितीयाया द्विवचने, भ्रूशब्दस्य चतुर्थ्या एकवचने, मातृशब्दस्य द्वितीयाया बहुवचने द्यौशब्दस्य प्रथमाया द्विवचने सिद्धानि रूपाणि लिखत ।

(५) नषट्स्वस्रादिभ्य' इति सूत्रस्यार्थं विलिख्य के स्वस्रादयस्ते दर्शनीयाः ।

---

(१) षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप् टापौ नस्त सूत्रार्थः ।

(२) याता=भ्रातृभार्या परस्परम् ।

# अथाजन्तनपुंसकलिङ्गाः

**अतोऽम्** (१) **७।१।२४**

अतोऽङ्गात्क्लीबात् स्वमोरम् । ज्ञानम् । एङ्ह्रस्वादिति संबुद्धिलोपः । हे ज्ञान(२)! ।

**नपुंसकाच्च ७।१।१९**

क्लीबादौङः शी स्यात् । भसंज्ञायाम् ।

**यस्येति च ६।४।१४८**

ईकारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः । इत्यकारलोपे प्राप्ते (औङः श्यां प्रतिषेधः) ज्ञाने ।

**जश्शसोः शिः ७।१।७०**

क्लीबात् ।

**शि सर्वनामस्थानम् १।१।४२**

**नपुंसकस्य झलचः ७।१।७२**

झलन्तस्याजन्तस्य च क्लीबस्य नुमागमः स्यात्सर्वनामस्थाने ।

**मिदचोऽन्त्यात्परः १।१।४७**

अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् । उपधादीर्घः । ज्ञानानि (३) । पुनस्तद्वत् । शेषं पुंवत् । एवं धन–वन–फलादयः ।

**अद्ड्डतरादिभ्यः पञ्चभ्यः ७।१।२५**

एभ्यः कलीवेभ्यः स्वमोरद्डादेशः ।

**टेः ६।४।१४३**

डिति भस्य टेर्लोपः । कतरत् । कतरद् । कतरे । कतराणि । हे कतरत् ! शेषं

---

(१) अमोऽम् विधानं 'स्वमोर्नपुंसकात्' इति प्राप्तस्य लुको बाधनार्थम् ।

(२) एङ्ह्रस्वादिति मकारलोपः ।

(३) 'ज्ञान + जश्' इत्यत्र 'जश्शसोः शिः' इत्यनेन शि, शकारस्येत्संज्ञालोपौ, सर्वनामस्थान-संज्ञायां नुम्, ज्ञानन् इ इति स्थितौ, 'सर्वनामस्थाने चासम्बुद्धौ' इति सूत्रेण उपधादीर्घः 'ज्ञानानि' इति शुभम् ।

पुंवत । इतरत् । अन्यत् २ । अन्यतरत् २ । अन्यतमशब्दस्य तु अन्यतममित्येव । (एकतरात्प्रतिषेधः) एकतरम् ।

**ह्रस्वो नपुंसके प्रातिपदिकस्य १।२।४७**

अजन्तस्येत्येव । श्रीपं ज्ञानवत् ।

**स्वमोर्नपुंसकात् ७।१।२३**

लुक् । वारि ।

**इकोऽचि विभक्तौ ७।१।७३**

इगन्तस्य क्लीबस्य नुमचि विभक्तौ । वारिणी । वारीणि(१) । न लुमतेत्यस्यानित्यत्वात् पक्षे सम्बुद्धिनिमित्तो गुणः । हे वारे(२) हेवारि! घेर्ङितीति गुणे प्राप्ते। (**वृद्ध्यौत्व–तृज्वद्भाव–गुणेभ्यो नुम् पूर्वविप्रतिषेधेन**) । वारिणे । वारिणः२ । वारिणोः२ । नुमचिरेति नुट् । 'नामि' इति दीर्घः । वारीणाम् । वारिणि । हलादौ हरिवत् ।

**तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ७।१।७४**

प्रवृत्तिनिवृत्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा टादावचि । अनादये, अनादिने इत्यादि । शेषं वारिवत् ।

**यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्तते ।**
**क्लीबवृत्तौ तदेव स्यादुक्तपुंस्कं तदुच्यते ॥**
**पीलुवृक्षः (३) फलं पीलु पीलुने नतु पीलवे ।**
**वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः ॥**

पीलुर्वृक्षः, फलं पीलु तस्मै – पीलुने । न पुंवत् । प्रवृत्तिनिमित्तभेदात् ।

---

(१) वारि + (जश्) शि, 'शि' इत्यस्य सर्वनामस्थानत्वात् 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घः ।

(२) 'इकोऽचिविभक्तौ' इति सूत्रे 'अचि' ग्रहणसामर्थ्यात् नलुमताङ्गस्यासिद्धत्वात् पक्षे संबुद्धिनिमित्तो गुणः, सलोपश्च ।

(३) फलवाचकपीलुशब्दस्य नपुंसकत्वात् नुम् – आगमेन पीलुने इति रूपम् । वृक्षवाचकस्य पीलुशब्दस्य तु इकारान्तपंलिङ्गवत् 'पीलवे' इति । वृक्षे निमित्तं पीलुत्वं फले तु पीलजत्वम् । अयमेव प्रवृत्तिनिवृत्तिभेदः ।

## अस्थि–दधि–सक्थ्यक्ष्णामनङुदात्तः ७।१।७५

टादावचि ।

## अल्लोपोऽनः ६।४।१३४

अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिप्रत्यय – परो योऽन् तस्याकारस्य लोपः । दध्ना । दध्ने । दध्नः२ । दध्नोः२ ।

## विभाषा ङिश्योः ६।४।१३६

अङ्गावयवोऽसर्वनामस्थान – यजादिस्वादिप्रत्ययपरो योऽन् तस्याऽकारस्य लोपो वा ङिश्योः । दध्नि, दधनि । शेषं वारिवत् । एवमस्थिसक्थ्यक्षीणि । सुधि(१) । सुधिनी । सुधीनि । हे सुधे !, हे सुधि ! । सुधिने । इत्यादि । मधु । मधुनि । मधूनि । हे मधो ! । हे मधु ! । एवम्मन्वादयः । सुलु । सुलुनी । सुलूनि । सुलुना इत्यादि । धातृ । धातृणि । धातृणि । हे धातः ! । हे धातृ ! । धात्रा । धातृणा । एवं ज्ञातृ – कर्त्रादयः ।

## एच इग्घ्रस्वादेशे १।२।४८

आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेव स्यात् । प्रद्यु । प्रद्युनी । प्रद्यूनि । प्रद्युना, इत्यादि । प्ररि । प्ररिणी । प्ररीणि । प्ररिणा । एकदेशविकृतमनन्यवत् । प्रराभ्याम्(३) । प्ररीणाम् । सुनु । सुनुनी । सुनूनि । सुनुनेत्यादि ।

### ॥ इत्यजन्तनपुंसकलिङ्गाः ॥

---

(१) सु = शोभना धीर्यस्य तत्कुलम् सुधि । 'ह्रस्वो नपुंसके...' इति ह्रस्वः । 'सुधि' शब्दः 'शोभना धीर्यस्य' इति – एकमेवार्थमुपादाय पुंलिङ्गे नपुंसकलिङ्गे च वर्तते तेन भाषितपुंस्कः ।

(२) आदिश्यमानेषु 'ह्रस्वो नपुंसके प्रा...' इत्यादिना आदिश्यमानेषु इगेव स्यात् – एचः स्थाने ह्रस्वः– अकार इक् च प्राप्नोति, तत्रायं नियमः– इगेव न तु– अकार इति ।

(३) प्ररि+भ्याम्– इत्यत्र 'एकदेशविकृतमनन्यवदिति (रै) शब्दाभावेऽपि 'रायो हलि' इति आत्वम् ।

## अभ्यासः

(१) हे ज्ञान !, ज्ञानानि, कतरत्, वारीणि, वारीणाम्, अनादये, दध्ना– एतेषां रूपाणां सिद्धिप्रकारं प्रदर्शयत।

(२) हे सुधे !, ज्ञातॄणि, प्रध्रि, प्रद्युना– एते प्रयोगाः कथं सिद्धयन्ति ?

(३) रूपाणि लिखत

सुलृशब्दस्य तृतीयायाएकवचने, प्रद्यो शब्दस्य प्रथमाया बहुवचने, प्रै शब्दस्य तृतीयाया द्विवचने, सुनौशब्दस्य प्रथमाया द्विवचने।

# अथ हलन्तपुंलिङ्गाः

**हो ढः (१) ८।२।३१**

झलि पदान्ते च। लिट्, (२) लिड्। लिहौ २। लिहः। लिड्भ्याम्। लिट्सु, लिट्त्सु (३)।

**दादेर्धातोर्घः ८।२।३२**

झलि पदान्ते चोपदेशे दादेर्धातोर्हस्य घः।

**एकाचो (४) बशो भष् झषन्तस्य स्ध्वोः ८।२।३७**

धात्ववयवस्यैकाचो झषन्तस्य बशो भष् से ध्वे पदान्ते च। इह (५) व्यपदेशिवद्भावेन धात्ववयवत्वाद् भष्भावः। धुक्, धुग्। दुहौ। दुहः। दुहा। धुग्भ्याम्। धुक्षु।

---

(१) हस्य ढःस्याज्झलि पदान्ते चेत्यर्थः। झलि परतः पूर्वस्य हकारस्य, पदान्ते विद्यमानस्य हकारस्य चेति भावः।

(२) लेढीति विग्रहे 'कर्तरि क्विप्' सुलोपे, ढत्वे, जश्त्वम्, विकल्पेन चर्त्वं च।

(३) 'लिड्+सु' इत्यवस्थायां 'डः सि धुट्' इति सूत्रेण धुडागमे 'खरि चेति' धकारडकारयोः चर्त्वम्।

(४) धातोरित्यस्यानुवृत्तिः। 'एकाच....झषन्तस्य' इति धात्ववयवस्य विशेषणम्। तथा च एकाचः झषन्तश्च यो धात्ववयवः (व्यपदेशिवद्भावेन धातुर्वा) तस्य (तदवयवस्य वशः=ब ग ड दानाम्) भष्। (भ, घ, ढ, धाः) स्यात् सकारे ध्वशब्दे च (परे) पदान्ते च, इति सूत्रार्थः।

(५) अत्र हि 'धातोरेकाचः' इति वैयधिकरण्याऽऽश्रयणम्। तेन धातोरवयवो य एकाच् झषन्तस्तस्य बशो भष्–इत्यर्थः।

नन्वत्र क्विबन्तस्य दुह् धातोः 'दादेर्धातोर्घः' इति घत्वेन झषन्तत्वेऽपि भष् भावो न स्यात्, यतः 'दुघ्' इति समुदायस्य यः पूर्वाऽवयवो 'दु' इत्येकाच् वर्तते न तद् झषन्तम्, यश्चोत्तराऽवयवः 'झष्' वर्तते न तत्र बश्, इत्याशङ्कायामाह–इह व्यपदेशिवद्भावेनेति। अर्थात् विशिष्टोऽपदेशो व्यपदेशः=मुख्यव्यवहारः सोऽस्यास्तीति व्यपदेशी तेन (व्यपदेशिना) तुल्यं व्यपदेशिवत्। राहोः शिरः–इति वत् अमुख्ये मुख्यव्यवहार इति यावत्। एवं च धात्ववयवस्यैकाच् झषन्तस्य बशः 'दु' इत्यस्य भष्भावेन 'घुघ्' इति जाते जश्त्वे चर्त्वम्।

**वा द्रुह-मुह-ष्णुह-ष्णिहाम् ८।२।३३**

एषां हस्य वा घो झलि पदान्ते च। ध्रुक्, ध्रुट्। ध्रुग् ध्रुट्। ध्रुड्। द्रुहौ। द्रुहः। ध्रुग्भ्याम्। ध्रुड्भ्याम्। ध्रुक्षु, (१) ध्रुट्स्, ध्रुट्त्सु। एवं मुह्।

**धात्वादेः षः सः ६।१।६४**

स्नुक् (२)। स्नुग्। स्नुट्, स्नुड्। एवं स्निह्।

**इग्यणः संप्रसारणम् १।१।४५**

यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात्।

**वाह ऊठ् ६।४।१३२**

भस्य वाहः संप्रसारणमूठ्।

**संप्रसारणाच्च ६।१।१०८**

संप्रसारणादचि पूर्वरूपमेकादेशः। वृद्धिः। विश्वौहः (३)। इत्यादि।

**चतुरनडुहोरामुदात्तः ७।१।९८**

सर्वनामस्थाने।

**सावनडुहः ७।१।८२**

नुम्। आच्छीनद्योरिति सूत्रादादित्यधिकाराद् अवर्णात्परोऽयं नुम्। अतो विशेषविहितेनापि नुमा आम् न बाध्यते। अमा च नुम् नबाध्यते। सुलोपः, संयोगान्तलोपः,

---

(१) द्रुह+सुप्, हस्य घत्वे, चर्त्वम् 'आदेशः प्रत्यययोः इति षत्वम्' क् ष् संयोगे क्षः। 'वाह' इति घत्वाभावपक्षे ढत्वे जश्त्वे च 'डः सि धुट्' इति वैकल्पिको 'धुट्' भष्भावश्च।

(२) ष्णुह् धातोः षस्य सत्वानन्तरम् "निमित्तापायेनैमित्तिकस्याऽप्यपायः इति नियमेन णकारस्या निवृत्तिः।

(३) विश्ववाह् (जस्) शस् 'वाह ऊठ्' इत्यनेन 'व इत्यस्य सम्प्रसारणम्, विश्व+उ+आह+अस्, पूर्वरूपम् — विश्व + उह् + अस् 'एतेधत्यूठ्सु इति वृद्धिः। वर्णसंयोगे 'सकारस्य रुत्वविसर्गे विश्वौहः।

नुम्विधिसामर्थ्याद्वसुस्रंस्वितिदत्वं न । संयोगान्तलोपस्यासिद्धत्वान्नलोपो न । अनड्वान् (१) ।

**अम् सम्बुद्धौ ७।१।९९**

चतुरनडुहोः । हे अनड्वन् ! । अनड्वाहौ । अनडुहः ।

**वसु–स्रंसु–ध्वंसनडुहां दः ८।२।७२**

सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते । अनडुद्भ्यामित्यादि । सान्तेति किम् ? विद्वान् । पदान्ते किम् ? (२) स्रस्तम् । ध्वस्तम् ।

**सहेः साडः षः ८।३।५६**

साड्रूपस्य सहेः सस्य मूर्धन्यादेशः । तुराषाट् (३) तुराषाड् । तुरासाहौ । तुराषाड्भ्यामित्यादि ।

**दिव औत् ६।१।१३१**

दिविति प्रातिपदिकस्यौत्स्यात् सौ । सुद्यौः (४) । सुदिवौ ।

**दिव उत् ७।१।८४**

पदान्ते । सुद्युभ्यामित्यादि । चत्वारः (५) । चतुरः । चतुर्भिः । चतुर्भ्यः२ ।

**षट्चतुर्भ्यश्च ७।१।५५**

एभ्य आमो नुडागमः स्यात् ।

---

(१) अनडुह् + सु, आम् (अनड्वाह + सु), नुम्, अनड्वान्ह + सु, सुलोपः, 'संयोगान्तस्य....' इति हकारलोपः, तस्याऽसिद्धत्वान्नलोपो न, अनड्वान् । अत्र 'वसुस्रंसु....' इति दत्वं तु न, 'सावनडुहः' इति नुम्– विधानसामर्थ्यात् ।

(२) स्रस्तम्, ध्वस्तम्–इत्यत्र न पदान्तत्वम्– तेन न दत्वम् ।

(३) तुरम् (वज्रम्) साहयति (अन्येषामपि दीर्घः) इति तुराषाड्= इन्द्रः ।

(४) 'सुदिव् + सु' वकारस्य–औत्वे, यणि, सस्य रुत्वविसर्गौ ।

(५) चतुर् + जस् (अस्)– 'चतुरन....' इति–आम् ।

**रषाभ्यां नो णः समानपदे (१) ८।४।१**

चतुर्णाम् (२)।

**रोः सुपि ८।३।१६**

रोरेव विसर्जनीयः सुपि । चतुर्षु (३) ।

**मो नो धातोः ८।२।६४**

पदान्ते । प्रशान् (४) । प्रशामौ ।

**किमः कः ७।२।१०३**

विभक्तौ । कः । कौ । के (५) । इत्यादि ।

**इदमो मः (६) ७।२।१०८**

सौ । त्यदाद्यत्वापवादः (७) ।

**इदोऽय् पुंसि (८) ७।२।१११**

इदम इदोऽय् सौ पुंसि । अयम् (९) । त्यदाद्यत्वे ।

**अतो गुणे ७।१।९७**

अपदान्तादतो गुणे पररूपमेकादेशः स्यात् ।

---

(१) रेफसकाराभ्यां परस्य नस्य णः स्यादेकपदे – इत्यर्थः ।

(२) अचोरहाभ्याम् – इति णस्य द्वित्वम् ।

(३) नात्र विसर्गः । रेफस्य 'यण्' प्रत्याहारान्तर्गतत्वादादेश प्रत्ययोरिति षत्वम् ।

(४) मकारान्तोऽयं 'प्रशाम्' शब्दः । मो – नो धातोः' इति सूत्रस्य त्रैपादिकत्वेनासिद्धत्वात् न नलोपः ।

(५) किमः सर्वनामत्वात् 'जशः शी' इति शी, ततो गुणः ।

(६) 'सौ' इत्यनुवर्तते । तेन 'इदम्' शब्दस्य मकारोऽन्तादेशः स्यात् सौ परे इत्यर्थः ।

(७) 'त्यदादी नामः' इति प्राप्तस्य अत्वस्य बाधनार्थमिदम् – इत्यर्थः ।

(८) इदम 'इद्' भागस्य स्थाने अयादेशे ।

(९) इदम् + सु, सुलोपः इदः – अय् ।

**दश्च ७।२।१०९**

इदमो दस्य मः स्याद्विभक्तौ। इमौ(१)। इमे(२)। त्यदादेः (३) संबोधनं नास्तीत्युत्सर्गः।

**अनाप्यकः (१३) ७।२।११२**

अककारस्य इदम इदोऽनापि विभक्तौ। आबिति प्रत्याहारः (५)। अनेन (६)।

**हलि लोपः ७।२।११३**

अककारस्य इदम इदो लोप आपि हलादौ। (नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे (७))।

**आद्यन्तवदेकस्मिन् १।१।२१**

एकस्मिन्क्रियमाणं कार्यमादाविवान्त इव च स्यात्। सुपि चेति दीर्घः। आभ्याम् (८)।

**नेदमदसोरकोः ७।१।११**

अककारयोरिदमदसोभिस ऐस् न स्यात्। एभिः(९)। अस्मै। एभ्यः २। अस्मात्। अस्य। अनयोः २(१०)। एषाम्। अस्मिन्। एषु।

---

(१) इदम् + औ – अत्वम्, पररूपम्, दस्य मत्वम्।
(२) सर्वनामत्वाद् जसः शी – आदेशे।
(३) प्रयोगदर्शनमेवात्र कारणम् प्रायिकोऽयं नियमः 'हे स' इति भाष्यप्रयोगादिति प्रभाकरः।
(४) ककाररहितस्य 'इदम्' शब्दस्य य 'इद्' भागस्तस्य 'अन' आदेशः स्यात् आपि विभक्तौ परत इत्यर्थः।
(५) टा (आ) इत्यारभ्य सुपः प्रकारपर्यन्तम् (आप्) प्रत्याहारः।
(६) इदम् + टा, त्यदाद्यत्वं पररूपं च अनादेशः 'टाङसिङसा...' इति टास्थाने 'इनः' गुणः।
(७) अभ्यासविकारं वर्जयित्वाऽनर्थकेऽलोन्त्यविधिर्न भवतीत्यर्थः।
(८) इदम् + भ्याम्, इदभागस्य लोपः दीर्घश्च।
( ) 'बहुवचने झल्येत्' इति एत्वम्।
(१०) 'ओसि च' इत्येत्वेऽयादेशः।

**द्वितीयाटौस्स्वेनः (१) २।४।३४**

इदमेतदोरन्वादेशे । किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तिरं विधातुं पुनरुपादानमन्वादेशः । यथा – अनेन व्याकरणमधीतम्, एनं छन्दोऽध्यापयेति । अनयोः पवित्रं कुलम्, एनयोः प्रभूतं स्वमिति । एनम् । एनौ । एनान् । एनेन । एनयोः २ । राजा(२) ।

**न ङि – सम्बुद्धयोः ८।२।८**

नस्य लोपो न ङौ सम्बुद्धौ च। हे राजन्! (ङावुत्तरपदे प्रतिषेधः(३) ) ब्रह्मनिष्ठः । राजानौ । राजानः । राजानम् । राजानौ । जञोर्ज्ञः राज्ञः(४) ।

**नलोपः सुप्–स्वर–संज्ञा–तुग्विधिषु कृति ८।२।२**

सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र राजाश्व(५) इत्यादौ । इत्यसिद्धत्वादात्वमेत्वमैस्त्वं च न (६)। राजभ्याम्। राजभिः। राजभ्यः। राज्ञि, (७) राजनि । यज्वा । यज्वानौ । यज्वानः ।

---

(१) द्वितीयायाम् (अम्, औट्, शस्–इत्येतेषु) 'टा' विभक्तौ, 'ओसि' च 'इदम्' शब्दस्य एतच्छब्दस्य च 'एन' आदेशः स्यादन्वादेशे इत्यर्थः ।

(२) राजन्+सु, 'हलङ्याप्' इति सुलोपः, नान्तस्य दीर्घे, नलोपः प्राति....इति नकारस्य लोपः राजा ।

(३) उत्तरपदे परतो यो ङिस्तस्मिन् परे 'न ङि–सम्बुद्धयोः' इति प्राप्तस्य निषेधस्य प्रतिषेधो वक्तव्य इति निष्कृष्टोऽर्थः । तथा च ब्रह्मनिष्ठ–इत्यत्र 'ब्रह्मणि निष्ठा अस्येति विग्रहे, समासानन्तरं नलोपो भवत्येव, समासे, 'निष्ठा' इत्यस्य उत्तरपदत्वात्, उत्तरपदं समासस्य चरमावयवे रूढम् (प्रसिद्धमित्यर्थः) ।

(४) राजन्+(शस्) अस् 'अल्लोपोऽनः' इत्यकारलोपः, श्चुत्वम्, जञोर्ज्ञः, राज्ञः ।

(५) न चात्र 'राजभ्याम्' इत्यादौ न लोपस्य 'पूर्वत्रासिद्धम्' इत्यनेनासिद्धत्वात्किमर्थं 'न लोपः सुप्स्वरः' इति सूत्रारम्भ इति वाच्यम्, एतत् सूत्रारम्भस्य नियमार्थत्वात् । तथा च 'सिद्धौ सत्यां पुनरारभ्यमाणोविधिर्नियमाय' इति न्यायः । नियमस्वरूपं चेतादृशम् 'न लोपश्चेदसिद्धः स्यात्तर्हि सुप् स्वरसंज्ञातुग्विधिष्वेव' इति । तेन 'राजाश्व' इत्यत्र षष्ठीसमासे नलोपे 'राज+अश्व' इत्यत्र सुबादिविधित्वाभावेन नलोपस्य नासिद्धत्वमिति 'अकः सवर्णे दीर्घः' इति दीर्घः ।

(६) अर्थात् 'राजभ्याम्' इत्यत्र 'सुपि च' इति आत्वम्, 'राजभ्यः' इत्यत्र 'बहुवचने झल्येत्' इति एत्वम्, 'राजभिः' इत्यत्र 'अतो भिस ऐस्' इति ऐस्त्वं च भवतीत्यर्थः ।

(७) अत्र 'विभाषा ङिश्योः इति विकल्पेन 'अ' कारलोपः ।

**नसंयोगाद्वमन्तात् ६।४।१३७**

वामान्तसंयोगादनोऽकारस्य लोपो न । यज्वनः। यज्वना । यज्वभ्याम् । ब्रह्मणः।

**इन् – हन् – पूषार्यम्णां शौ ६।४।१२**

एषां शावेवोपधाया दीर्घः ।

**सौच ६।४।१३**

इन्नादीनामुपधाया दीर्घोऽसम्बुद्धौ सौ। वृत्रहा । हेवृत्रहन् !

**एकाजुत्तरपदे णः (१) ८।४।१२**

एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्त–नुम्-विभक्तिस्थस्य नस्य णत्वं स्यात्। वृत्रहणौ (२) वृत्रहणः ।

**हो हन्तेर्ञ्णिन्नेषु ७।३।५४**

ञिति णिति प्रत्यये नकारे च परे हन्तेर्हस्य कुत्वं स्यात् ।

**हन्तेः ८।४।११**

उपसर्गस्यान्निमित्ताद्धन्तेर्नस्य णः। प्रहण्यात् ।

**अत्पूर्वस्य ८।४।११**

हन्तेरत्पूर्वस्यैव नस्य णो नान्यस्य। प्रघ्नन्ति । योगविभागसामर्थ्यादनन्तरस्य (३) विधिर्वा भवति प्रतिषेधो वेति न्यायं बाधित्वा कुमति चेति णत्वमपि निवर्तते। वृत्रघ्नः(४), इत्यादि। एवं शार्ङ्गिन्। यशस्विन्। अर्यमन्। पूषन् ।

---

(१) अत्रोत्तरपदशब्दः समासस्य चरमावयवे रूढः (प्रसिद्धः)।

(२) वृत्रहन्+औ, अत्र प्रातिपदिकान्तनकारस्य णकारः ।

(३) अत्रायं विचार्यते–यदि 'अत्पूर्वस्य' इति सूत्रेण 'हन्तेः' इत्यनेन प्राप्तं णत्वमेव व्याववर्तेत हि'हन्तेरत्पूर्वस्य'इत्येकमेव सूत्रं स्यात् । तादृशसूत्रविधाने'न उपसर्गस्थान्निमित्तात्परस्य हन्तेरपूर्वस्य णत्वम्' इत्यर्थकरणेऽपि 'घ्नन्ति' इत्यत्र णत्वनिवृत्तिसम्भवात्। तस्माद् योगविभागेन 'ण' त्वमात्रस्य निषेधकोऽयमिति ज्ञायते ।

(४) वृत्रहन्+(शस्) अस् अल्लोपः, हस्य कुत्वेन घः, वर्णसंयोगश्च ।

**मघवा बहुलम् ६।४।१२८**

मघवन्–शब्दस्य वा तृ इत्यन्तादेशः। ऋ इत्।

**उगिदचां सर्वनामस्थानेऽधातोः ७।१।७०**

अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम् स्यात्सर्वनामस्थाने परे। मघवान् (१)। इह उपधादीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं न भवति, बहुलग्रहणात् (२)। मघवन्तौ। (शसि) मघवतः। मघवता। तृत्वाभावे मघवा (३)। सुटि राजवत्।

**श्व (४) –युव–मघोनामतद्धिते ६।४।१३३**

अन्नन्तानामेषामतद्धिते परे संप्रसारणं स्यात्। मघोनः (५)। मघवभ्यामित्यादि। एवं श्वन्, युवन्।

**न संप्रसारणे संप्रसारणम्(६) ६।१।३८**

इति यकारस्य नेत्वम्। अत एव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम्। यूनः (७) युवभ्यामित्यादि। अर्वा। हे अर्वन्!।

---

(१) मघवन्+सु, अन्ते 'तृ' आदेशे, नुमि, उपधादीर्घे, सकार–तकारयोर्लोपे 'तृ' लोपस्यासिद्धत्वान्न लोपो न।

(२) 'क्वचित् प्रवृत्तिः, क्वचिदप्रवृत्तिः, क्वचिद्विभाषा..' इत्यादिरूपेण बहूनर्थान् लातीति बहुलम्।

(३) तृत्वाभावपक्षे 'मघवन्' शब्दो नान्तः, उपधादीर्घो नलोपश्च।

(४) अस्मिन् सूत्रे सुभाषितमेतत्–

**प्रश्न – काचं मणिं काञ्चनमेकसूत्रे ग्रथ्नासि बाले! किमिदं विचित्रम्।**
**उत्तरम् – विचारवान् पाणिनिरेकसूत्रे श्वानं युवानं मघवानमाह॥**

(५) मघवन् + (शस्) अस्, वकारस्योत्वे (सम्प्रसारणे) पूर्वरूपे च गुणः।

(६) सम्प्रसारणे परतः पूर्वस्य यणः सम्प्रारणं नस्यादित्यर्थः।

(७) युवन् + (शस्) अस्, वस्य सम्प्रसारणे 'य् उ अन् + अस्' पूर्वरूपं सवर्णदीर्घः।

**अर्वणस्त्रसावनञः ३।४।१२७**

नञा रहितस्यार्वन्नित्यस्य 'तृ' इत्यन्तादेशो न तु सौ। अर्वन्तौ (१)। अर्वन्तः। (शसि) अर्वतः। अर्वद्भ्याम्।

**पथि-मथ्यृभुक्षामात्(२) ७।१।८५**

एषमाकारोऽन्ता देशः स्यात्सौ।

**इतोत्सर्वनामस्थाने ७।१।८६**

पथ्यादेः।

**थोन्थः ७।१।८७**

पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने। पन्थाः। हे पन्थाः। पन्थानौ। पन्थानः।

**भस्य टेर्लोपः ७।१।८८**

पथ्यादेर्भस्य टेर्लोपः। पथः। पथिभ्याम्। पथिभ्यः। एवं मन्थाः। ऋभुक्षाः।

**ष्णान्ताः षट् १।१।२४**

षान्ता नान्ता च संख्या षट्संज्ञा स्यात्। पञ्च २। पञ्चभिः। षट्चतुर्भ्यश्चेति नुट्।

**नोपधायाः ६।४।७**

नान्तस्योपधाया दीर्घो नामि। (३) पञ्चानाम्। पञ्चसु।

**अष्टन आ विभक्तौ ७।२।८४**

हलादौ वा स्यात् (४)।

---

(१) अर्वा- अश्वः, नान्तोऽयं शब्दः। 'अर्वन्तौ' इत्यत्र 'अर्वन् + औ' इति स्थितौ 'तृ' इत्यन्तादेशः 'उगिदचा' मिति नुम्, अनुस्वारपरसवर्णश्च।

(२) अन्त्यस्य = नकारस्याऽऽकारः। पन्थाः- एवं मन्थाः, मन्थानौ, मन्थानः, शसि मथः। ऋभुक्षाः, ऋभुक्षाणौ, शसि 'ऋभुक्षः'।

(३) 'पञ्चन् + आम्' नुट्, नकारलोपः, नलोपस्यासिद्धत्वान्नामीत्यप्राप्ते- 'नोपधायाः' इति सूत्रारम्भः।

(४) अत्र 'रायो हलि' इत्यस्मात् 'हलि' इत्यपकृष्यते।

## अष्टाभ्य औश् ७।१।२१

कृताकारादष्टनो जशशसोरौश् । अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जशशसोर्विषये आत्वं ज्ञापयति । अष्टौ २ (१) । अष्टाभिः । अष्टाभ्यः २ । अष्टानाम् (२) । अष्टासु । आत्वाभावे-अष्ट । पञ्चवत् ।

## ऋत्विग्–दधृक्–स्रग्–दिगुष्णिगञ्चु–युजि–क्रुञ्चां च ३।२।५९

एभ्यः क्विन् । अञ्चेः सुप्युपपदे । युजिक्रुञ्चोः (३) केवलयोः । क्रुञ्चेर्नलोपाभावश्च निपात्यते । कनावितौ (४) ।

## कृदतिङ ३।१।९३

अत्र धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः ।

## वेरपृक्तस्य ६।१।६७

अपृक्तस्य वस्य लोपः ।

## क्विन्प्रत्ययस्य कुः ८।२।६२

क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः पदान्ते । अस्याऽसिद्धत्वाच्चोः कुरिति कुत्वम् । ऋत्विक् (५), ऋत्विग् । ऋत्विग्भ्याम् ।

## युजेरसमासे ७।१।७१

युजेः सर्वनामस्थाने नुम् स्यादसमासे । सुलोपः । संयोगान्तस्य लोपः । कुत्वेन नस्य ङः । युङ । अनुस्वार–परसवर्णौ, युञ्जौ । युञ्जः । युजः । युजा । युग्भ्याम् । असमासे किम् ? सुयुग् ।

---

(१) अष्टन्+अस्–इत्यवस्थायां नकारस्याऽऽत्वे, सवर्णदीर्घे जस–औस् वृद्धिः ।

(२) अष्टन्+आम्, 'षट्चतुर्भ्यश्च' इत्यनेन नुटि, नोपधादीर्घे, नलोपः ।

(३) सूत्रे चकारपठनेनेदं ज्ञायते ।

(४) क्विन्–प्रत्यये ककार–नकारौ–इत्संज्ञौ भवतः ।

(५) 'ऋतुषु यजति' इति विग्रहे क्विन्प्रत्यये 'वचि स्वपि ..' इति सम्प्रसारणं, पूर्वरूपं यणादेशश्च । ऋत्विज्+सु, इति जाते 'हलङ्याबिति' सलोपे, 'चोकुः' इति कुत्वे, वा चर्त्वम् ।

**चो कुः ८।२।३०**

चवर्गस्य कवर्गः स्याज्झलि पदान्ते च । सुयुक् (१) । सुयुजौ । सुयुजः । सुयुग्भ्याम् । खन् (२) । खञ्जौ । खञ्जः । खन्भ्याम् ।

**व्रश्च–भ्रस्ज–सृज–मृज–यज–राज–भ्राज–च्छ–शां षः ८।२।३६**

झलि पदान्ते च । जश्त्वचर्त्वे । राट् (३) । राड् । राजौ । राजः । राड्भ्याम् । एवम् । विभ्राट् । देवेट् (४) । विश्वसृट् । परिमृट् । (**परौ व्रजेः षः पदान्ते**) परावुपपदे व्रजेः क्विप् दीर्घश्च पदान्ते षत्वमपि । परित्यज्य सर्वं व्रजतीति परिव्राट् (५) । परिव्राजौ ।

**विश्वस्य वसुराटोः (६) ६।३।१२८**

विश्वस्य दीर्घः स्यादसौ राट्शब्दे च परे । राडिति पदान्तोपलक्षणार्थम् । विश्वाराट् । विश्वाराड् । विश्वराजौ । विश्वाराड्भ्याम् ।

**स्कोः संयोगाद्योरन्ते च ८।२।२९**

पदान्ते झलि च परे यः संयोगस्तदाद्योः सकारककारयोर्लोपः । भृट् (७) । सस्य श्चुत्वेन शः । झलां जश् झसीति शस्य जः । भृज्जौ । भृज्जः । भृड्भ्याम् । त्यदाद्यत्वं (८) पररूपत्वं च ।

---

(१) सुष्ठु युनक्तीति विग्रहः । 'युजेरसमासे' अनेन समासे 'नुम्' निषेधात् न नुम् ।

(२) नायं क्विन्प्रत्ययान्तः किन्तु क्विबन्तः, तेन न कुत्वम् । 'खञ्ज' शब्दोऽयम् ।

(३) राट्–'ज' इत्यस्य षत्वम्, तस्य जश्त्वेन डः, वा चर्त्वम् ।

(४) देवान् यजति–इति विग्रहः, क्विपि, यकारस्य सम्प्रसारणम्, पररूपम्, गुणः, ततः 'देवेज् शब्दः' 'ज' स्य षत्वम्, 'ष' स्य जश्त्वं, चर्त्वञ्च ।

(५) सर्वं गृहादिकं परित्यज्य गच्छतीति परिव्राट् संन्यासी ।

(६) अत्र 'राट्' इति टकारविशिष्टग्रहणं पदान्तोपलक्षणार्थम् । उपलक्षणत्वं च–'स्वबोधकत्वे सति स्वेतरबोधकत्वम् ।'

(७) भृज्जतीति विग्रहे–भ्रस्ज्धातोः क्विपि सम्प्रसारणम्, स्कोरिति सलोपः । जकारस्य 'व्रश्चेति' षत्वे जश्त्वे च वा चर्त्वम् ।

(८) 'त्यदादीनामः' इति– अत्वम् । 'अतो गुणे' इति पररूपम् ।

**तदोः स सावनन्त्ययोः ७।२।१०६**

त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सोः । स्यः(१) । त्यौ । त्ये । सः । तौ । ते । यः । यौ । ये । एषः । एतौ । एते । एनम् । एनौ । एनान् । एनेन । एनयोः ।

**ङे:- प्रथमयोरम् ७।१।२८**

युष्मदस्मद्भ्यां परस्य ङे इत्यतस्य प्रथमाद्वितीययोश्चामादेशः ।

**त्वाहौ सौ (२) ७।२।९४**

अनयोर्मपर्यन्तस्य ।

**शेषे लोपः ७।२।९०**

आत्वयत्वनिमित्तेतरविभक्तौ – अनयोष्टिलोपः । त्वम् । अहम् ।

**युवावौ द्विवचने ७।२।९२**

द्वयोरुक्तावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ ।

**प्रथमायाश्च द्विवचने भाषायाम् (३) ७।२।८८**

औङ्येतयोरात्वं लोके । युवाम् । आवाम् ।

**यूय - वयौ जसि ७।२।९३**

अनयोर्मपर्यन्तस्य । यूयम् । वयम् ।

**त्वमावेकवचने ७।२।९७**

एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ ।

**द्वितीयायां च ७।२।८७**

अनयोरात्स्यात् । त्वाम् । माम् ।

---

(१) 'त्यद्' शब्दस्येदं रूपम् । सः–इदं 'तद्' शब्दस्य । यः–'यद्' शब्दः । एनम्–'एतद्' शब्दस्य अन्वादेशे रूपाणि ।

(२) 'युष्म' 'अस्म' इति भागस्येत्यर्थः ।

(३) 'औङ' इत्यौकारविभक्तेः संज्ञा ।

**शसो नः ७।१।२९**

आभ्यां शसो नः। अमोऽपवादः। आदेः परस्य। संयोगान्तलोपः। युष्मान्। अस्मान्।

**योऽचि ७।२।८९**

अनयोर्यादेशोऽजादौ विभक्तौ। त्वया। मया।

**युष्मदस्मदोरनादेशे ७।२।८६**

अनयोरात्स्यादनादेशे हलादौ विभक्तौ। युवाभ्याम्। आवाभ्याम्। युष्माभिः। अस्माभिः।

**तुभ्य मह्यौ ङयि (१) ७।२।९५**

अनयोर्मपर्यन्तस्य। टिलोपः। तुभ्यम्। मह्यम्।

**भ्यसो भ्यम् (२) ७।१।३०**

आभ्यां परस्य। युष्मभ्यम्। अस्मभ्यम्।

**एकवचनस्य च (३) ७।१।३२**

आभ्यां ङसेरत्। त्वत्। मत्।

**पञ्चम्या अत् ७।१।३१**

आभ्यां भ्यसः। युष्मत्। अस्मत्।

**तव–ममौ ङसि ८।१।९६**

अनयोर्मपर्यन्तस्य।

**युष्मदस्मद्भ्यां ङसोऽश् (४) ८।१।२७**

तव (५)। मम। युवयोः २ (६)। आवयोः २।

---

(१) युष्मदस्मदोर्मपर्यन्तस्य युष्म, अस्म–इति भागस्य 'तुभ्यमह्यौ' आदेशौ स्तः 'ङे' विभक्तौ इत्यर्थः। 'टिलोपः' 'शेषे लोपः' इत्यनेन।

(२) युष्मदस्मद्भ्यां परस्य भ्यसः 'चतुर्थीबहुवचनस्य' 'अभ्यम्' इत्यादेशः स्यादित्यर्थः।

(३) पञ्चम्येकवचनस्येत्यर्थः। त्वत् मत् 'त्वमावेकवचने' इति त्वमौ।

(४) अत्र—अशः शित्करणं सर्वादेशार्थज्ञापनार्थम्। अन्यथा 'आदेः परस्य' इत्यनेन परस्थाने स्यात्।

(५) ङसि—षष्ठ्येकवचने इत्यर्थः।

(६) अत्र 'युवावौ द्विवचने' इति युवावौ।

**साम आकम्(१) ७।१।३३**

आभ्यां साम आकम्। युष्माकम्। अस्माकम्। त्वयि। मयि। युष्मासु(२)। अस्मासु।

**युष्मदस्मदोः षष्ठी–चतुर्थी–द्वितीयास्थयोर्वान्नावौ ८।१।२०**

पदात्परयोरपादादौ स्थितयोः षष्ठ्यादिविशिष्टयोर्वान्नावौ।

**बहुवचनस्य वस् – नसौ ८।१।२१**

उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः।

**तेमयावेकवचनस्य ८।१।२२**

उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः।

**त्वामौ द्वितीयायाः ८।१।२३**

उक्तविधयोर्द्वितीयैकवचनान्तयोस्त्वामौ स्तः।

**श्रीशस्त्वाऽवतु माऽपीह(३), दत्तात्ते मेऽपि शर्म सः।**
**स्वामी ते मेऽपि स हरिः, पातु वामपि नौ विभुः ॥१॥**
**सुखं वां नौ ददात्वीशः, पतिर्वामपि नौ हरिः।**
**सोऽव्याद्वो नः शिवं वो नो, दद्यात्सेव्योऽत्र वः स नः ॥२॥**

(एकवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः)। एकतिङ् वाक्यम्। तेनेह न। ओदनं पच तव भविष्यति। इह तु स्यादेव शालीनां ते ओदनं दास्यामि। एते वांनावादय आदेशा अनन्वादेशे वा वक्तव्याः अन्वादेशे तु नित्यं स्युः। धाता ते भक्तोऽस्ति। तव भक्तोऽस्तीति वा। तस्मै ते नम इत्येव।

**न च – वाहाहैवयुक्ते ८।१।२४**

चादिपञ्चकयोगे नैते आदेशाः स्युः। हरिस्त्वां मां च रक्षतु। कथं त्वां मां वा न रक्षेदित्यादि।

---

(१) सामस्थाने 'आकम्' विधानम्। 'आमि सर्वनाम्नः सुट्' इति सुटो निवृत्त्यर्थम्।

(२) अत्र 'युष्मदस्मदोरनादेशे' इत्यात्वम्।

(३) अत्रेयं व्यवस्था – द्वितीया – चतुर्थी – षष्ठीविभक्तीनां प्रथममेकवचनानाम्, द्वितीयं द्विवचनानाम्, तृतीयञ्च बहुवचनानां क्रमेणात्र प्रयोगः। आदेशव्यवस्था चेदृशी, द्वितीयैकवचने 'त्वा – मौ' इति। चतुर्थीषष्ठ्यैकवचनयोः 'ते–मे' इति। विभक्तित्रयबहुवचने वस् – नसौ। सर्वत्र द्विवचने 'वाम्–नौ' इति भवतः।

**पश्यार्थैश्चानालोचने ८।१।२५**

अचाक्षुषज्ञानार्थधातुभिर्योगे नैते आदेशाः स्युः। चेतसा त्वां समीक्षते । आलोचने तु भक्तस्त्वां पश्यति चक्षुषा ।

**सपूर्वायाः प्रथमाया विभाषा ८।१।२६**

विद्यमानपूर्वात्प्रथमान्तादन्वादेशेऽप्येते आदेशा वा स्युः। भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम् । त्वामेति वा ।

**साऽऽमन्त्रितम् २।३।४८**

सम्बोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात् ।

**आमन्त्रितं पूर्वमविद्यमानवत् ८।१।७२**

अग्ने तव (१) । देवास्मान्पाहि ।

**नामन्त्रिते समानाधिकरणे सामान्यवचनम् ८।१।७३**

विशेष्यं समानाधिकरणे विशेषणे आमन्त्रिते परे नाविद्यमानवत् । हरे दयालो(२) नः पाहि । सुपात्, सुपाद् । सुपादौ ।

**पादः पत् ६।४।१३०**

पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः । सुपदः । सुपदा । सुपाद्भ्याम् । अग्निमत्(३) । अग्निमद् । अग्निमथौ । अग्निमद्भ्याम् ।

**अनिदितां हल उपधायाः क्ङिति ६।४।२**

हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः किति ङिति च । उदिचामिति नुम् । संयोगान्तस्य लोपः । नस्य कुत्वेन ङः । प्राङ(४) । प्राञ्चौ । प्राञ्चः ।

---

(१) अत्र 'अग्ने' इति शब्दः, 'देव' इति शब्दोऽविद्यमानवदभूत् । तेनात्रउभयत्र सौ आदेशौ न भवतः । यतः तव – अस्मान् – इत्येतयोः पदात्परत्वाभावात् ।

(२) अत्र दयालो – इति समानाधिकरणविशेषणे परे हरिशब्दोनाऽविद्यमानवत् । तेन 'दयालो' इत्यस्याविद्यमानत्वेऽपि 'हरे!' इति पदात्परत्वान्नसादेश इति भावः ।

(३) 'अग्निं मथ्नाति' इति विग्रहः, थान्तोऽयं शब्दः । जश्त्वचर्त्वे ।

(४) प्रपूर्वक अञ्चधातोः 'ऋत्विक्दधृक्. . .' इति क्विन्प्रत्यये सर्वापहारिलोपः, क्विनन्त्वात् प्रातिपदिकसंज्ञायां सौ – प्राञ्च+सु, नलोपः, नुम्, 'संयोगान्त. ...' इति चकारलोपः, नकारस्य 'क्विन् प्रत्ययस्य कुः' इत्यनेन ङः ।

**अचः ६।४।१३८**

लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः ।

**चौ ६।४।१३८**

लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घ. । प्राचः । प्राचा । प्राग्भ्याम् । प्रत्यङ । प्रत्यञ्चौ । प्रतीच (१) । प्रत्यग्भ्याम् । उदङ । उदञ्चौ ।

**उद ईत् ६।४।१३९**

उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत् । उदीचः । उदीचा । उदग्भ्याम् ।

**समः (२) समि ६।३।९३**

अप्रत्ययान्तेऽञ्चतौ परे । सम्यङ । सम्यञ्चौ । समीचः (३) । सम्यग्भ्याम् ।

**सहस्य सध्रिः ६।३।९५**

तथा । सध्र्यङ । सध्र्यञ्चौ । सध्रीचः (४) । सध्र्यग्भ्याम् ।

**तिरसस्तिर्यलोपे ६।३।९४**

अलुप्ताकारेऽञ्चतौ अप्रत्ययान्ते तिरसस्तिर्यादेशः (५) । तिर्यङ । तिर्यञ्चौ । तिरश्चः । तिरश्चा । तिर्यग्भ्याम् ।

**नाञ्चेः पूजायाम् ६।४।३०**

पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न । प्राङ । प्राञ्चौ । नलोपाभावादल्लोपो न । प्राञ्चः । प्राङ्भ्याम् । प्राङ्षु, प्राङ्क्षु, । एवं प्रजार्थे प्रत्यङ्ङादयः । क्रुङ । क्रुञ्चौ । क्रुञ्चः ।

---

(१) प्रत्यञ्च + (शस्) 'अस्, नलोपः, 'अचः' इत्यकारलोपः, पूर्वस्याणः 'प्रति' इत्येतद्गतस्य 'इ' कारस्य दीर्घः प्रतीचः ।

(२) 'सम्' इत्यस्य 'समि' इत्यादेश इत्यर्थः ।

(३) यथा प्रतीचः । 'न' लोपः, 'अ' लोपः दीर्घश्च ।

(४) 'समीचः' वत् ।

(५) तिरसः 'तिरि' आदेश इत्यर्थः । 'तिरश्चः' इत्यत्र 'न' लोपानन्तरम्—'अचः' इति–अकारलोपान्तिर्य्यादिशः ।

क्रुङ्भ्याम्। पयोमुक्(१), पयोमुग्। पयोमुचः। पयोमुग्भ्याम्। मह पूजायाम्, 'वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च' एते निपात्यन्ते। शतृवच्चैषां कार्यं स्यात्। उगित्वान्नुम्।

**सान्तमहतः संयोगस्य(२) ६।४।१०**

सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने। महान्। महान्तौ। महान्तः। हे महन्। महतः। महद्भ्याम्।

**अत्वसन्तस्य चाधातोः ६।४।१४**

अत्वन्तस्योपधाया दीर्घो धातुभिन्नासन्तस्य चासम्बुद्धौ सौ। धीमान्। धीमन्तौ। धीमन्तः। हे धीमन्!। शसादौ महद्वत्। भातेर्डवतुः(३)। डित्वसामर्थ्यादभस्यापि टेर्लोपः। भवान्। भवन्तौ। शत्रन्तस्य तु भवन्(४)।

**उभे अभ्यस्तम् ६।१।५**

षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्त-संज्ञे स्तः(५)।

**नाभ्यस्ताच्छतुः ७।१।७८**

अभ्यस्तात्परस्य शतुर्नुम् न। ददत्। ददतौ।

**जक्षित्यादयः षट् ६।१।६**

षड् धातवोऽन्ये जक्षितिश्च सप्तम एतेऽभ्यस्तसंज्ञाः स्युः। जक्षत्। जक्षतौ। जक्षतः। एवं जाग्रत्। दरिद्रत्। शासत्। चकासत्। दीधीङ दीप्तिदेवनयोः। वेवीङ वेतिना तुल्ये। एतौ छान्दसौ। दीध्यत्। वेव्यत्।

**जक्षि – जागृ – दरिद्रा – शास् – दीधीङ – वेवीङ – चकास्तथा।**
**अभ्यस्तसंज्ञा विज्ञेया धातवो मुनिभाषिताः॥१॥**

गुप्। गुब्। गुपौ। गुपः। गुब्भ्याम्।

---

(१) पयो 'जलम्' मुञ्चति–इति विग्रहः मेघोऽर्थः।

(२) 'विद्वान्' (विद्वांसौ) महान् (महान्तौ) इत्यादौ च 'संयोगान्तस्य लोपः' इत्यनेन कृतस्य सकारतकारलोपस्याऽसिद्धत्वान्नन्तोपधत्वं नास्तीति 'सर्वनामस्थाने चा..' इति दीर्घप्राप्त्यभावात्–एतत् सूत्रारम्भः।

(३) 'भा' (दीप्तौ) इत्यस्मादित्यर्थः।

(४) शत् प्रत्ययान्तस्य अत्वन्तत्वाभावात् 'अत्वसन्तस्य..' इति दीर्घो न।

(५) षष्ठाध्यायस्य द्वित्वप्रकरणे–इत्यर्थः।

## त्यदादिषु दृशोऽनालोचने कञ् च ३।२।६०

त्यदादिषूपपदेषु अज्ञातार्थाद् दृशेर्धातोः कञ् स्यात् । चात्क्विन् ।

## आ सर्वनाम्नः (१) ६।३।९१

दृग्दृशवतुषु । तादृक्,(२) तादृग् । तादृशौ । तादृशः । तादृग्भ्याम् । व्रश्चेति षः । जश्त्वचर्त्वे । विट्, विड् । विशौ । विशः । विड्भ्याम् ।

## नशेर्वा ८।२।६३

नशेः कवर्गोऽन्तादेशो वा पदान्ते । नक्, नग्, नट् (३) । नड् । नशौ । नशः। नड्भ्याम् । नग्भ्याम् ।

## स्पृशोऽनुदके क्विन् ४।२।५६

अनुदके सुप्युपपदे स्पृशेः क्विन् । घृतस्पृक्,(४) घृतस्पृग् । घृतस्पृशौ । घृतस्पृशः । दधृक्, दधृग् । दधृषौ । दधृषः । दधृग्भ्याम् । रत्नमुट्, रत्नमुड् । रत्नमुषौ । रत्नमुषः । रत्नमुड्भ्याम् षट्,(५) षड् । षड्भिः । षण्णाम्(६) । षट्त्सु, षट्सु । यत्तु प्राचा षण्णां षड्णामित्युदाहृतं तत्प्रामादिकमेव । प्रत्यये भाषायामिति नित्यवचनात् । रुत्वं प्रति षत्वस्याऽसिद्धत्वात् ससजुषोरुरिति रुत्वम् ।

---

(१) सर्वनाम्नः– आकारोन्ताऽऽदेशः स्याद् दृग्दृश्वतुषु ।

(२) 'स' इव दृश्यते इति तादृक् । तद् + दृश् + क्विन्, क्विनः सर्वापहारे 'आ सर्वनाम्नः' इति दकारस्य – आत्वे, तादृश्, इत्यवस्थायां सु – विभक्तौ, व्रश्चेति षः, षस्य 'झलां जशोऽन्ते' इति डः, तस्य क्विन् प्रत्ययस्येति 'गः' 'वाऽवसाने' वा कः – तादृक्, तादृग् । कञ् प्रत्यये तु 'तादृशः' इति रामवत् ।

(३) कुत्वाभावपक्षे षत्वम्, जश्त्वम्, चर्त्वं च ।

(४) अत्रापि क्विनः सर्वापहारे, शस्य व्रश्चेति षत्वे, जश्त्वं, कुत्वं, चर्त्वं च ।

(५) नित्यं बहुवचनान्तः, बहु गणेति संख्यासंज्ञाऽनन्तरे 'षड्भ्यो लुक्' इति लुकि, जश्त्वं, चर्त्वम् ।

(६) षण्णाम् – आमि 'षट्चतुर्भ्यश्च' इति नुट्, षस्य जश्त्वेन डत्वे, 'षड् + नाम्' इत्यवस्थायां'ष्टुनाष्टुः' इति नस्य ष्टुत्वम्, 'प्रत्यये भाषायां नित्यम्' इति डस्य णत्वे षण्णामिति ।

**र्वोरुपधाया दीर्घ इकः ८।२।७६**

रेफ–वान्तस्य धातोरुपधाया इको दीर्घः पदान्ते । पिपठीः(१) । पिपठिषौ । पिपठिषः । पिपठीर्भ्याम् ।

**नुम्विसर्जनीय – शर्व्यवायेऽपि ८।३।५८**

एतैः प्रत्येकं व्यवधानेऽपि इणकुभ्यां परस्य सस्य मूर्धन्यादेशः । ष्टुत्वेन पूर्वस्य षः । पिपठीष्षु, पिपठीःषु । चिकीः । चिकीर्षौ । चिकीर्ष । विद्वान्(२) । विद्वांसौ । हे विद्वन् ! ।

**वसोः संप्रसारणम् ६।४।१३१**

वस्वन्तस्य भस्य संप्रसारणम् । विदुषः । वसुस्रंस्विति दत्वम् । विद्वद्भ्याम् ।

**पुंसोऽसुङ ७।१।८९**

सर्वनामस्थाने विवक्षितेऽसुङ स्यात् । पुमान्(३) । हे पुमन् ! । पुमांसौ । पुंस । पुंभ्याम् । पुंसु । ऋदुशनेत्यनङ, उशना(४) । उशनसौ । (**अस्य सम्बुद्धौ वाऽनङ नलोपश्च वा वाच्यः**) । हे उशने, ! हे उशनन् !, हे उशनः ! । उशनोभ्याम् । अनेहा । अनेहसौ । अनेहसः । हे अनेहः ! । वेधाः(५) । हे वेधः ! । वेधसौ । वेधसः । वेधोभ्याम् ।

**अदस औ सुलोपश्च ७।२।१०७**

सौ परे । तदोरिति सः । असौ । (**औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च**) असकौ । असुकः । त्यदाद्यत्वं पररूपत्वम्, वृद्धिः ।

---

(१) पठितुमिच्छतीति विग्रहे 'पठ्' धातोः सनन्तात् क्विपि, पिपठिस् शब्दात् सौ पिपठिस्+सु, हल्ङ्याबिति सुलोपे षत्वस्यासिद्धत्वात् 'ससजुषो रुः' इति रुत्वम्, 'र्वो' रिति दीर्घः विसर्गश्च ।

(२) विद्वस् शब्दात् सौ–'उगिदचां....' इत्यनेन नुमि, सान्त महतः....' इति दीर्घः, सलोपः । विदुषः–विद्वस्+शस् (अस) सम्प्रसारणम् ।

(३) पुंस्+सु, असुङ, पुमस्+सु, सुलोपः, 'उगिदचा' मिति नुम्, 'सान्त महतः....' इति दीर्घः, संयोगान्तलोपः, पुमान् ।

(४) वशेः कनसिः प्रत्ययः, ग्रहिज्येति सम्प्रसारणम्, उशनस् शब्दात् सौ, 'ऋदुशनेति' अङ, 'सर्वनामस्थाने' इति दीर्घः, सकारनकारलोपे–उशना ।

(५) अत्वसन्तस्येति दीर्घः । एवं चन्द्रमस् शब्दस्य–चन्द्रमाः ।

## अदसोऽसेर्दादुदो मः ८।२।८०

अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य मश्च । आन्तरतम्याद्ध्रस्वस्य उः । दीर्घस्य ऊः अमू । 'जसः शी' । गुणः ।

## एत ईद्बहुवचने ८।२।८१

अदसो दात परस्यैत ईद्दस्य च मो बह्वर्थोक्तौ । अमी (१) । पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे । अमुम् । अमून् । मुत्वे कृते घिसंज्ञायां नाभावः ।

## न मु ने ८।२।३

नाभावे कर्तव्ये कृते च मुभावो नासिद्धः । अमुना (२) । अमूभ्याम् (३) । अमीभिः । अमुष्मै । अमीभ्यः । अमुष्मात् । अमुष्य । अमुयोः । अमीषाम् । अमुष्मिन् । अमुयोः । अमीषु ।

## ॥ इति हलन्तपुंलिङ्गाः ॥

### अभ्यासः

(१) लिटत्सु, लिट्सु, धुक्षु, ध्रुग्भ्याम् स्निक्, विश्वौहः, अनड्वान् एतेषां रूपाणां सिद्धिप्रकारं लिखत ।

(२) सुद्यौः, प्रशान्, अयम्, एनम्, यज्वनः, वृत्रहा, मघवान् एतेषां रूपाणां साधने विशेषसूत्राणि प्रदर्शनीयानि ।

(३) यूनः, पन्थाः, पञ्चानाम्, अष्टौ, ऋत्विक्, युङ्, राट्, भृट्, सः, यः, एषः– एतेषां रूपाणां सिद्धिप्रकारं प्रदर्शयत ।

---

(१) अदस् + (जस्) अस, त्यदाद्यत्वे पररूपे 'जशःशी' 'आद् गुणे' 'अदे' इति स्थितौ 'एत ईद्बहुवचने' इति ईत्वे दस्य मश्च । एवं तृतीयादि बहुवचने सर्वत्र 'बहुवचने झल्येत्' इति—'एत्वं' कृत्वा ईत्वं दस्य मत्वं च विधेयम् ।

(२) 'टा' विभक्तौ उत्वमत्वानन्तरम् 'अमु + आ' इत्यवस्थायां मुभावस्यासिद्धत्वात्-घिसंज्ञाभावेन 'आङो नास्त्रियाम्, इत्यनेन 'ना' भावाप्राप्तौ सूत्रम् 'न मु ने' इति 'ना' भावे कृतेऽपि मुमभावो नासिद्धः, तेन न 'इन' आदेशः ।

(३) अदस् + भ्याम्, त्यदाद्यत्वं, पररूपत्वम्, सुपि चेति दीर्घः– 'अदाभ्याम्' इत्यवस्थायां उत्वं मुत्वं च ।

(४) अहम्, युवाम् युष्मान्, मह्यम्, त्वत्, मत्, युष्मासु एतेषां रूपाणां साधनरीतिं कथयत।

(५) 'श्रीशस्त्वाऽवतु माऽपीह' इति श्लोकं संपूर्य रूपसिद्धिप्रकारं च दर्शयत ।

(६) न च–वाहाहैव युक्ते, सपूर्वायाः प्रथमाया विभाषा, नामन्त्रिते समानाधिकरणे सामान्यवचनम्–एतेषां सूत्राणामर्थमुदाहरणानि च प्रदर्शनीयानि ।

(७) सुपदः, प्राङ, उदीचः, सध्र्यङ, प्राञ्चः, महान्, हे धीमन्!, जक्षत्, तादृक्–एतेषां प्रयोगाणां साधनं कया रीत्या क्रियते ?

(८) घृतस्पृक्, पिपठीः, विदुषः, पुमान् हे उशनन्, वेधाः, अमू, अमुना, अमुष्मै–एतेषां साधने विशेषसूत्राणि प्रदर्शनीयानि।

# अथ हलन्ताः स्त्रीलिङ्गाः

**नहो धः ८।२।३४**

नहो हस्य धः स्याद् झलि पदान्ते च ।

**नही–वृति–वृषि–व्याधि–रुचि–सहि–तनिषु क्वौ ६।३।११६**

क्विबन्तेषु पूर्वस्याणो दीर्घः । उपानत् (१)। उपानहौ । उपानहः । उपानद्भ्याम् । उपानत्सु । क्विन्नन्तत्वात्कुत्वेन हस्य घः । जश्त्वचर्त्वे । उष्णिक् (२), उष्णिग् । उष्णिहौ । उष्णिग्भ्याम् । द्यौः (३)। दिवौ । दिवः । द्युभ्याम् । गीः (४)। गिरौ । गिरः । एवं पूः (५)। चतस्रः२। चतसृभिः । चतसृभ्यः २। चतसृणाम् (६)। चतसृषु । का (७)। के । काः । सर्वावत् ।

**यः सौ ७।२।११०**

इदमो दस्य यः सौ । 'इदमो मः' इयम् । त्यदाद्यत्वम्, पररूपत्वम्, टाप् । दश्चेति मः । इमे । इमाः । इमाम् । इमे । इमाः । अनया । हलि लोपः । आभ्याम् । आभिः अस्यै । अस्याः २। अनयोः २। आसाम् । अस्याम् । आसु । स्रक्, स्रग् । स्रजौ । स्रजः। स्रग्भ्याम् । त्यदाद्यत्वे टाप् । स्या । त्ये । त्याः । एवम्–तद् (८) । यद् । वाक्, वाग् (९)। वाचौ । वाचः । वाग्भ्याम् ३। अप्शब्दोः नित्यं बहुवचनान्तः । अप्तृन्निति दीर्घः । आपः । अपः ।

---

(१) 'उप' उपसर्गात् णह (बन्धने) धातोः क्विप्, पूर्वपदस्य दीर्घः। पादत्रयाणाम् एवं नीवृत्, प्रावृट् । मर्मावित् । परीतत् । इत्यादौ पूर्वपदस्य दीर्घः।

(२) उद्–उपसर्गपूर्वकात् 'ष्णिह' धातो 'ऋत्विग्दधृग्....' इति क्विन् सर्वापहारिलोपे–निपातनाद् द् लोपे उष्णिह + सु, क्विनन्तत्वात्कुत्वेन हस्य घः जश्त्वचर्त्वे उष्णिक् । उष्णिग् ।

(३) 'दिव औत्' इति वस्य औत्वम्, विसर्गः। द्युभ्याम्–'दिव उत्' इति उत्वम् ।

(४) गिर्+सु, सुलोपः 'र्वोरुपधाया..' इति दीर्घः, रेफस्य विसर्गः। वाणी–इत्यर्थः।

(५) पूः=नगरी ।

(६) 'न तिसृचतसृ' इति निषेधान् नदीर्घः ।

(७) 'किमः कः' इति कादेशे स्त्रियां टाप्, हल्ङ्याबिति सुलोपः ।

(८) तत् शब्दस्य स्त्रियां–सा ते ताः। एतत् शब्दस्य एषा एते एताः ।

(९) वाच्–शब्दात् 'चो कुः' इति कवर्गादेशः ।

**अपो भि ७।४।४८**

अपस्तकारो भादौ प्रत्यये। अद्भिः। अद्भ्यः। अपाम्। अप्सु। दिक्(१)दिग्। दिशौ। दिशः। दिग्भ्याम्। त्यदादिष्विति दृशेः (२)। क्विन्विधानादन्यत्रापि कुत्वम्। दृक् (३), दृग्, दृशौ। दृशः। दृग्भ्याम्।, त्विट्, त्विड्। त्विषौ। त्विषः। त्विड्भ्याम्। ससजुषोरिति रुत्वम्। सजूः। सजुषौ। सजूर्भ्याम्। आशीः (४)। आशिषौ। आशीर्भ्याम्। असौ (५)। उत्वमत्वे। अमू। अमूः। अमुया (६)। अमूभ्याम्। अमूभिः। अमुष्यै (७)। अमूभ्यः। अमुष्याः२। अमुयोः२। अमूषाम्। अमुष्याम्। अमूषु।

## ॥ इति हलन्ताः स्त्रीलिङ्गाः ॥

### अभ्यासः

(१) उपानत्, उष्णिक्, द्युभ्याम्, गीः, चतसृणाम्, इयम्, स्रक्, वाक्, अद्भिः, दिक्— एतानि रूपाणि साधनीयानि।

(२) दृक्, आशीः, अमूः, अमूषाम् केषां शब्दानां कति वचने एतानि रूपाणि जायन्ते?

(३) पुरशब्दस्य तृतीयाया द्विवचने, स्त्रीवाचक इदम्शब्दस्य तृतीयाया बहुवचने, किंशब्दस्य प्रथमाया बहुवचने, त्यद्शब्दस्य प्रथमाया एकवचने, त्विष्शब्दस्य तृतीयाया द्विवचने जायमानानि रूपाणि लिखत।

---

(१) दिश् शब्दात् 'ऋत्विक्दधृग्..' सूत्रेण क्विन्।

(२) 'क्विन् प्रत्ययस्य' इति सूत्रे क्विन् प्रत्ययो दृष्टो यस्मादिति बहुव्रीहिः, तथा च अत्र क्विन्प्रत्ययाभावेऽपि 'तादृक्' इत्यादौ 'दृशोऽनालोचने..' इत्यनेन क्विन्-विधानदर्शनात् भवत्येव कुत्वम्।

(३) अत्र क्विप्।

(४) 'आङ् शासु इच्छायाम्' इत्यस्मात् 'क्विप्' 'आशासः क्वावुपसंख्यानम्' इत्युपधाया इत्वम् 'शासिवसिघसीनाञ्च' इति सस्य षः। आशिष् शब्दात् सुलोपे षस्य रुत्वे 'र्वोरुपधाया' इति दीर्घः।

(५) अदस् शब्दात् सौ— 'अदस औ सुलोपश्च' इति–औत्वे–सुलोपे दस्य सत्वे च।

(६) अदस्+टा, त्यदाद्यत्वपररूपे स्त्रीत्वाद् ( टाप् ) सवर्णदीर्घः। 'आङि चापः' इत्येत्वेऽयादेशः 'अदया' इत्यवस्थायाम्–उत्वमत्वे, अमुया।

(७) अदस्+ङे, त्यदाद्यत्वं पररूपम्, टाप्, 'अदा+ए' इत्यवस्थायां 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याट्–आपश्च ह्रस्वः, वृद्धौ उत्वे मत्वे षत्वे च अमुष्यै।

# अथ हलन्तनपुंसकलिङ्गाः

स्वमोर्लुक् । दत्वम् । स्वनडुत्, (१) स्वनडुद् । स्वनडुही । चतुरनडुहोरित्याम् । स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् । वाः (२) । वारी । वारि । वारा । वार्भ्याम् । चत्वारि (३) । किम् (४) । के । कानि । इदम् । इमे । इमानि । ( **अन्वादेशे नपुंसके एनद्वक्तव्यः**) एनत् । एने । एनानि । एनेन । एनयोः २। व्योम । व्योम्नी, व्योमनी । व्योमानि । ब्रह्म । (**संबुद्धौ नपुंसकानां नलोपो वा वाच्यः**) हे ब्रह्म, हे ब्रह्मन् । हे ब्रह्मणी । हे ब्रह्माणि । रोऽसुपि' । अहः (५) । 'विभाषा ङिश्योः' । अह्नी । अहनी । अहानि ।

**अहन् ८।२।६८**

अहन्नित्यस्य रुः पदान्ते । अहोभ्याम् (६) । दण्डि । दण्डिनी । दण्डीनि । सुपथि (७) । टिलोपः, सुपथी । सुपन्थानि । ऊर्क्, (८) ऊर्ग ऊर्जी । ऊर्न्जी । ऊर्न्जि । नरजानां संयोगः। त्यद् । त्ये । त्यानि । तत् । ते । तानि । यत् । ये । यानि । एतत् । एते । एतानि । अवङ् स्फोटायनस्येति अवङ ।

**गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः ।**
**असंध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम् ॥१॥**
**स्वम्सुप्सु नव, षड् भादौ षट्के स्युस्त्रीणि जश्शसोः।**
**चत्वारि शेषे दशके रूपाणीति विभावय ॥२॥**

---

(१) स्वमोर्लुकानन्तरं 'वसुस्रंसु' इत्यनेन दत्वम् ।

(२) 'वार्' इति रान्तोऽयं शब्दः ।

(३) चतुर्+(जस्) शि, चतुरनडुहो..' इत्यात्वम् ।

(४) स्वमोर्लुगनन्तरं 'किमःकः' कादेशो न भवति विभक्तेरभावात् । प्रत्ययलक्षणन्तु न प्रवर्तते । न लुमतेति लुकिनिषेधात् ।

(५) अहन्+सु, सुलोपः, 'रोऽसुपि' इति नकारस्य रेफादेशः, विसर्गः ।

(६) रुः– आदेशे 'हशि च' इति उत्वम् । गुणः ।

(७) सुपथि–शोभनमार्गम्–नगरम् । द्विवचने (सुपथी) नपुंसकत्वेन सर्वनामस्थानसंज्ञाऽभावात् 'यचि भम्' इति भसंज्ञायाम्' 'टेः' इति टिलोपः । बहुवचने–'सुपन्थानि'– 'शिसर्वनामस्थानम्' इति शेः सर्वनामस्थानत्वात् 'थोन्थः' इति न्थादेशः, इतोत्सर्वनामस्थाने' इति–अत्वे सुपन्थ+इ, इति स्थितौ 'नपुंसकस्य झलचः' इति नुम्, उपधा दीर्घः ।

(८) 'ऊर्ज्' धातोः क्विप्, चो कुः, इति कुत्वं चर्त्वम्, बहुवचने नरजा–नां संयोगः– ऊर्ज्+इ, नुमि ऊर्न्जि ।

गवाक्(१), गवाग् । गोची । गवाञ्चि । पुनस्तद्वत् । गोचा । गवाग्भ्याम् । शकृत् । शकृती । शकृन्ति । ददत् । ददती ।

**वा नपुंसकस्य ७।१।७६**

अभ्यस्तात्परो यः शतुरवयवस्तदन्तस्य क्लीबस्य नुम् वा स्यात्सर्वनामस्थाने । ददन्ति, ददति । तुदत् ।

**आच्छीनद्योर्नुम् ७।१।८०**

अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्य नुम्वा शीनद्योः । तुदन्ती, तुदती । तुदन्ति । भात् । भान्ती, भाती । भान्ति । पचत् ।

**शप्श्यनोर्नित्यम् ७।१।८१**

शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नुम् शीनद्योः । पचन्ती (२) । दीव्यत् । दीव्यन्ती । धनुः । धनुषी । सान्तेति दीर्घः । नुम्विसर्जनीयेति षः । धनूंषि धनुर्भ्याम् (३) । एवं चक्षुर्हविरादयः । पयः । पयसी । पयांसि । पयोभ्याम् । सुपुम् (४) । सुपुंसी । सुपुमांसि । अदः । विभक्तिकार्यम् । उत्वमत्वे । अमू । अमूनि । (५) शेषं पुंवत् ।

## ॥ इति हलन्तनपुंसकलिङ्गाः ॥

### अभ्यासः

(१) स्वनड्वांहि, एनानि, हे ब्रह्म !, अहोभ्याम्, ऊर्न्जि, ददन्ति, तुदन्ती, पचन्ती, धनूंषि, पयोभ्याम्, अमूनि कथं सिद्ध्यन्ति निर्दिष्टाः प्रयोगाः ।

(२) गवाक्शब्दस्य केषु केषु वचनेषु कति रूपाणि भवन्ति, सप्रमाणं दर्शनीयानि ।

---

(१) गोपूर्वकादञ्चेः क्विनि, क्विनः सर्वापहारे, कृदन्तत्वात् प्रातिपदिकत्वे सौ गो अञ्च+सु, सुलोपे 'अनिदितां हल' इति नस्य लोपः। 'अवङ स्फोटायनस्य' इत्यवङि सवर्णदीर्घः, 'चो कुः' इति कुत्वम्, जश्त्वे वैकल्पिके चर्त्वे च गवाक्, गवाग् 'प्रकृति भावे गो अक्, गो अग् पूर्वरूपे गोक्, गोग्–पूजायां गवाङ, गो अङ, गोऽङ । इति सौ नवरूपाणि । कुत्र कति रूपाणि भवन्ति, तत्सम्बन्धे 'गवाक्शब्दस्य रूपाणि' इत्यनेन प्रदर्शितानि ।

(२) द्विवचनान्तमिदम्, बहुवचने तु पचन्ति ।

(३) धन–धातोः 'उस्' प्रत्यये 'धनुष्' शब्दो भवति । तेन रेफान्तत्वेऽपि धातुत्वाभावात्–हलि चेति, र्वोरिति च न दीर्घः ।

(४) शोभनाः पुमांसो यत्र तत् कुलं–सुपुम्–जसि 'नपुंसकस्य झलचः' इति नुम् 'सान्त महतः. . . .' इति दीर्घः सुपुमांसि ।

(५) अदस् शब्दस्य प्रथमाया बहुवचने रूपम् ।

# अथाऽव्ययप्रकरणम्

**स्वरादिनिपातमव्ययम् १।१।३७**

स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः ।

१. स्वर् २. अन्तर् ३. प्रातर् ४. पुनर् ५. सनुतर् ६. उच्चैस् ७. नीचैस् ८. शनैस् ९. ऋधक् १०. ऋते ११. युगपत् १२. आरात् १३. पृथक् १४. ह्यस् १५. श्वस् १६. दिवा १७. रात्रौ १८. सायम् १९. चिरम् २०. मनाक् २१. ईषत् २२. जोषम् २३. तूष्णीम् २४. बहिस् २५. अवस् २६. अधस् २७. समया २८. निकषा २९. स्वयम् ३०. वृथा ३१. नक्तम् ३२. न ३३ नञ् ३४. हेतौ ३५. इद्धा ३६. अद्धा ३७. सामि ३८. वत् ३९. ब्राह्मणवत् ४०. क्षत्रियवत् ४१. सना ४२. सनत् ४३. सनात् ४४. उपधा ४५. तिरस् ४६. अन्तरा ४७. अन्तरेण ४८. ज्योक् ४९. कम् ५०. शम् ५१. सहसा ५२. विना ५३. नाना ५४. स्वस्ति ५५. स्वधा ५६. अलम् ५७. वषट् ५८. श्रौषट् ५९. वौषट् ६०. अन्यत् ६१. अस्ति ६२. उपांशु ६३ क्षमा ६४. विहायसा ६५. दोषा ६६. मृषा ६७. मिथ्या ६८. मुधा ६९. पुरा ७०. मिथो ७१. मिथस् ७२. प्रायस् ७३. मुहुस् ७४. प्रवाहुकम् ७५. प्रवाहिका ७६. आर्यहलम् ७७. अभीक्ष्णम् ७८. साकम् ७९. सार्धम् ८०. नमस् ८१. हिरुक् ८२. धिक् ८३. अथ ८४. अम् ८५. आम् ८६. प्रताम् ८७. प्रशान् ८८. मा ८९. माङ (आकृतिगणोऽयम्) ९०. च ९१. वा ९२. ह ९३. अह ९४. एव ९५. एवम् ९६. नूनम् ९७. शश्वत् ९८. युगपत् ९९. भूयस् १००. कूपत् १०१ सूपत् १०२. कुवित् १०३. नेत् १०४. चेत् १०५. चण् १०६. यत्र १०७. कच्चित् १०८. नह १०९. हन्त ११०. माकिः १११. माकिम् ११२. नकिः ११३. नकिम् ११४. माङ ११५. नञ् ११६. यावत् ११७. तावत् ११८. त्वै ११९. न्वै १२०. द्वै १२१. रै १२२. श्रौषट् १२३ वौषट् १२४. स्वाहा १२५. स्वधा १२६. वषट् १२७. तुम् १२८. तथाहि १२९. खलु १३०. किल १३१. अथो १३२. अथ १३३. सुष्ठु १३४. स्म १३५. आदह + (उपसर्ग-विभक्ति-स्वर-प्रतिरूपकाश्च) १३६. अवदत्तम् १३७. अहंयुः १३८. अस्तिक्षीरा १३९. अ १४०. आ १४१. इ १४२. ई १४३. उ १४४. ऊ १४५. ए १४६. ऐ १४७. ओ १४८. औ १४९. पशु १५०. शुकम् १५१. यथाकथा च १५२. पाट् १५३. प्याट् १५४. अङ्ग १५५. है १५६. हे १५७. भोः १५८. अये १५९. द्य १६०. विषु १६१. एकपदे १६२. युत् १६३. आतः ।

चादिरप्याकृतिगणः ।

**तद्धितश्चासर्वविभक्तिः १।१।३८**

यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यात् । ((१) परिगणनं कर्तव्यम्) । तसिलादयः प्राक् पाशपः । शस्प्रभृतयः (२) प्राक् समासान्तेभ्यः । अम् । आम् । कृत्वोर्थाः (३) । तसिवती (४) । नानाञौ । इति । एतदन्तमव्ययम् । अत इत्यादि (५) ।

**कृन्मेजन्तः १।१।३९**

कृद्यो मान्त एजन्तश्च तदन्तमव्ययम् । स्मारंस्मारम् (६) । जीवसे (७) । पिबध्यै ।

**क्त्वा–तोसुन्कसुनः १।१।४०**

एतदन्तमव्ययम् । कृत्वा । उदेतोः । विसृपः ।

**अव्ययीभावश्च १।१।४१**

अधिहरि ।

**अव्ययादाप्सुपः २।४।८२**

अव्ययाद्विहितस्यापः सुपश्च लुक् । तत्र शालायाम् । विहितविशेषणान्नेह । अत्युच्चैसौ । अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्ति तथापि न गौणे । आप् ग्रहणं व्यर्थम् । अव्ययस्यालिङ्गत्वात् । तथा च श्रुतिः–

---

(१) 'पञ्चम्यास्तसिल्' इत्यतः 'याप्येपाशप्' इति पर्यन्तमित्यर्थः ।

(२) "बह्वल्पार्थात् · · · · शस्' इत्यारभ्य 'समासान्ताः · · · · समासान्ता इति सूत्रपर्यन्ताः ।

(३) 'सङ्ख्याया · · · · कृत्वसुच्' इत्यादि विहिताः कृत्वसुजादयस्त्रयः– अम् आम्, प्रत्ययौ, तदन्ता इत्यर्थः ।

(४) 'तसिश्च' इति विहितः तसिप्रत्ययः । 'तेन तुल्यं' 'तत्र तस्येव' इति विहित वति प्रत्ययश्च ।

(५) अस्मात् स्थानात्, कारणात् वा तसिल् प्रत्ययान्तोऽयम् ।

(६) अत्र णमुल् प्रत्ययः । स्मृत्वा स्मृत्वा– इत्यर्थः ।

(७) (असे) प्रत्यय जीवनाय– इत्यर्थः । पिबध्यै– 'शध्यै' प्रत्ययः । पानायेत्यर्थः ।

(अव्यय–लक्षणम्)

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥१॥
वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥२॥

अवगाहः । वगाहः । अपिधानम् । पिधानम् ॥ इत्यव्ययानि ॥

॥ इति सुबन्तं समाप्तम् । (इति पूर्वार्द्धम्) ॥

अभ्यासः

(१) अव्ययविधायकसूत्राणि सोदाहरणं दर्शनीयानि ।
(२) अव्ययलक्षणं किम् ?
(३) भागुरिः किं वष्टि ?

## कक्षागत रूपमा कक्षा ८ का विद्यार्थीले गाउने
## राष्ट्रिय गीत

तराई हेर कति राम्रो हरियो वन हुनाले
पहाड हेर झनै राम्रो गुराँस फुल्नाले
म त हेर त्यसै राम्रो यसै राम्रो
त्यसै राम्रो नेपाली हुनाले
सगरमाथा मेरै आफ्नो शिर भइदिनाले ।।

अरूको भरमा बाँच्नु पर्छ हातै नहुनेले
एक दिन भोकै मर्नु पर्छ पौरख नहुनेले
म त मेरै पौरख खान्छु
म त हातका नङ्ग्रा खियाउँछु, नेपाली हुनाले
पञ्चायत मेरै हातको औंला भइदिनाले ।।

अरूको सारमा हिंड्नु पर्छ आँखै नहुनेले
अन्यायलाई सहनु पर्छ निर्धो भइदिनाले
म त अन्यायसित लड्छु,
ठूलो सानो एउटै देख्छु, नेपाली हुनाले
राजा–रानी मेरै दुइटा आँखा भइदिनाले ।।

संस्कृतव्याकरणम् ऐच्छिकम् कक्षा ८